# KṚTYA-TATTVĀRṆAVA

(PART I)

*By*

ŚRĪNĀTHA ĀCHARYA-CUḌĀMAṆI

*Edited By*

Dr RAJENDRA CHANDRA HAZRA






THE ASIATIC SOCIETY

1975

BIBLIOTHECA INDICA—A COLLECTION OF ORIENTAL WORKS

# KṚTYA-TATTVĀRṆAVA

(PART I)

*By*

ŚRĪNĀTHA ĀCĀRYA-CŪḌĀMAṆI

*Edited By*

DR RAJENDRA CHANDRA HAZRA




THE ASIATIC SOCIETY
1975

BIBLIOTHECA INDICA—A COLLECTION OF ORIENTAL WORKS

श्रीनाथाचार्यचूड़ामणि विरचितः

# कृत्यतत्त्वार्णवः

( प्रथमो भागः )

डक्टर श्रीराजेन्द्रचन्द्र हाजरा सम्पादित




दि एशियाटिक सोसाइटि
१९७५

# FOREWORD

IT WILL exceed all limits of propriety if I feign to take upon myself the task of introducing Dr. R. C. Hazra, the editor of the present publication, to the scholars interested in studies in Sanskrit.

The editor has reserved for himself the arduous task of introducing the author of the Smriti work. The introduction will be published in Part II. Scholars may suffer some inconvenience, which, I hope, they will forgive.

In editing the work Dr. Hazra has relied on eight texts, the first of which is dated Saka 1503, the year, Din Ilahi was proclaimed. The work belongs to an age of writing injunctions on rites and modes of their performances. The Smriti work was followed by "Tattvas" of Raghunandana and *Haribhakti-vilas* of Gopalbhatta Goswami besides other numerous writings on identical subject. One may fancy that Raghunandana added "tattva" as suffix to his works following his teacher's "tattvarnava".

The Society had notice of the work as far back as in 1874 having been referred to by Rajendralala Mitra in his *Notices of Sanskrit Mss.*, item No. 986. The manuscript which came to his hands was written in Bengali characters and was noticed to bear the title *Krityakalavinirnaya*. The surname of the author as appearing from the beginning of the said *Mss.* was only referred to in the Notice. The learned editor has referred to the said manuscript in his critical notes.

The beginning may be of much interest to scholars of Medieval Vaishnavism in Bengal. It may reveal intimate connection of the author with the group of Madhavendrapuri and Advaityacharyya, the harbingers of Sreekrishna Chaitanya.

I owe an apology to the scholars and readers for delay in bringing out the publication which was, however, due to unavoidable circumstances, beyond the control of the Society and the editor.

D. K. MITRA
*General Secretary*

The Asiatic Society
October, 1975

# PREFACE

THIS is to present, for the first time, before the scholarly world a critical edition of the hitherto unpublished Smṛti work entitled Kṛtya-tattvārṇava by Śrīnātha Ācārya-cūḍāmaṇi, a highly renowned Smṛti-writer of mediæval Bengal, who was the son of Mahāmahopādhyāya Śrīkarācārya and the teacher of the illustrious Smārta Raghunandana. This edition is based on the following eight Manuscripts :

1. DA = Dacca University Ms. No. 49, dated Śaka 1503.
2. DB = Dacca University Ms. No. 4320, dated Śaka 1717.
3. DC = Dacca University Ms. No. 4620, bearing no date.
4. DD = Dacca University Ms. No. M2.38/12 (as given in the Valuation List), dated Śaka 1749.
5. DE = Dacca University Ms. No. 652B, which is incomplete.
6. AS = Asiatic Society (Calcutta) Ms. No. G3690, dated Śaka 1636.
7. SP = Sanskrit Sāhitya Pariṣat (Calcutta) Ms. No. 518 (Smṛti), lacking the first five folios and bearing the date Śaka 174[].
8. VSP = Vaṅgīya Sāhitya Pariṣat (Calcutta) Ms. No. 1535, bearing no date.

For some unforeseen difficulties in the way of its printing it has been absolutely necessary to divide its text into two Parts and to reserve the copious INTRODUCTION (containing all information about Śrīnātha's works, personal history, date, etc., and a detailed description of the Mss. used for this edition) for publication as Appendix I at the end of Part II. As usual, the BIBLIOGRAPHY, INDICES, ERRATA, etc., will follow the Appendices at the end of the second Part.

Calcutta,
March 22, 1975

R. C. HAZRA

## ABBREVIATIONS

Acom. = Aparāditya's commentary Aparārka on the Yājña-valkya-smṛti.

App. = Appendix.

ASB = Asiatic Society of Bengal (Calcutta).

Bibl. Ind. = Bibliotheca Indica (Asiatic Society), Calcutta.

Calcutta Sanskrit College Catalogue = See below 'Shastri and Gui, etc.'

Cc = Caturvarga-cintāmaṇi (of Hemādri).

Com. = Commentary.

Dpt = Durgāpūjā-tattva (of Raghunandana).

Ds = Dānasāgara (of Vallālasena).

Dv = Durgotsava-viveka (of Śūlapāṇi).

Ed. = Edition.

Kn = Kāla-nirṇaya (of Mādhavācārya).

Kv = Kāla-viveka (of Jīmūtavāpana).

Mitra, Notices = R. L. Mitra, Notices of Sanskrit Manuscripts.

Mp = Madana-pārijāta (of Mananapāla).

Ms.; Mss. = Manuscript; Manuscripts.

Np = Nityācāra-paddhati (of Vidyākara Vājapeyin).

-p. = -purāṇa.

Pbh = Parāśara-bhāṣya (of Mādhavācārya).

Sc = Smṛti-candrikā (of Devaṇabhaṭṭa).

Śd-k = Śuddhi-kaumudī (of Govindānanda).

Shastri and Gui, Calcutta Sanskrit College Catalogue = Hrishikesh Shastri and Shiva Chandra Gui, Descriptive Catalogue of Sanskrit Manuscripts in the Library of the Calcutta Sanskrit College.

| | | |
|---|---|---|
| Śk | = | Śrāddha-kaumudī (of Govindānanda). |
| Sp | = | Saṃvatsara-pradīpa. |
| St | = | Smṛti-tattva (of Raghunandana). |
| Śv | = | Śrāddha-viveka (of Śūlapāṇi). |
| Vaṅga. ed. | = | Vaṅgavāsī Press edition (Calcutta). |
| Veṅkaṭ. ed. | = | Veṅkaṭeśvara Press edition (Bombay). |
| Vk | = | Varṣa-kaumudī (of Govindānanda). |
| VM-Dp | = | Vācaspati-miśra's Durgotsava-prakaraṇa, |
| Vv | = | Vratakāla-viveka (of Śūlapāṇi). |
| Yāj. | = | Yājñavalkya-smṛti. |

# TABLE OF CONTENTS


| *Subject* | *Page* |
|---|---|
| Preface .... .... .... | i |
| Abbreviations .... .... .... | ii |
| The Text ( Part I ) .... .... .... | १ |
| मङ्गलाचरणम् .... .... .... | १ |
| ग्रन्थप्रयोजनकथनम् .... .... .... | १ |
| कालनिर्णयारम्भ : .... .... .... | २ |
| तत्र कर्मणि कालस्याङ्गत्वम् .... .... | २ |
| संवत्सरनिरूपणम् .... .... .... | ३ |
| अयननिरूपणम् .... .... .... | ८ |
| ऋतुनिरूपणम् .... .... .... | ६ |
| अधिमासनिर्णय : .... .... .... | २८ |
| अधिमासस्वरूपविचारः .... .... .... | २८ |
| अस्य च द्वेधा संभवः .... .... .... | ३२ |
| सार्धवर्षद्वयोपचेयाधिमासस्यैव कर्मानर्हता .... | ३२ |
| अधिमासे कर्तव्यकर्माणि निषिद्धकर्माणि च .... | ४० |
| संक्रान्तिनिर्णयः .... .... .... | ५५ |
| द्वादश संक्रान्तयः .... .... .... | ५५ |
| संक्रान्तेरतिसूक्ष्मकालत्वात् तत्पूर्वापरस्थूलकालानामेव पुण्यत्वम् | ५६ |
| ईदृशस्य पुण्यकालस्य परिमाणनिर्णयः .... .... | ५६ |
| संक्रान्तौ कर्तव्यकर्माणि तत्फलानि च .... .... | ६२ |
| महाजयासंक्रान्तौ अनुष्ठितानां जपहोमादीनां फलम् .... | ६३ |
| संक्रान्तौ वर्जनीयकर्माणि .... .... | ६४ |
| ग्रहणनिर्णयः .... .... .... | ६६ |
| राहुदर्शने करणीयं स्नानदानश्राद्धादि, तत्फलं च .... | ६६ |

*Subject* *Page*


ग्रहणकाले भोजननिषेधः .... .... ६६
बालादीनां संबन्धे भोजनाभोजननियमः .... ७३
भोजनविधिनिषेधौ दृष्टोपरागविषयावेव, न तु पुंमात्रविषयौ ७६
मुक्त्यनन्तरं परान्नभोजने निषेधः .... .... ७७
ग्रहणे विमुक्तौ च अशौचव्यवस्था .... .... ७७
ग्रहणदर्शनं जननमरणाशौचिनापि कर्तव्यम् .... ७७
जननमरणशौचिनस्तु स्नानमात्रेऽधिकारो न दानश्राद्धादौ .... ७८
ग्रहणे श्राद्धम् आमान्नेनैव कर्तव्यम् .... .... ८०
तत्र पुरोरवोमाद्रवसोरेव देवतात्वम् .... .... ८०
चूडामणियोगस्तत्फलं च .... .... ८०
ग्रहणे चासमुद्रगायामपि नद्यां स्नाने रजदोषो नास्ति .... ८१
ग्रहणनिमित्तकस्नानश्राद्धादिकं तु रात्रावपि कार्यम् .... ८१
सामान्यतिथिषु कर्माङ्गत्वनिर्णयः .... .... ८२
दशमीनियमाः .... .... .... ११०
द्वादशीनियमाः .... .... .... ११३
विद्धैकादशीव्यवस्थोपसंहारः .... .... १२६
वैशाखमासीयतिथिकृत्यनिर्णयः .... .... १४०
तत्र मेषसंक्रान्तौ गङ्गास्नानं पिण्डरहितश्राद्धं च कर्तव्यम् १४०
तत आरभ्यापरसंक्रान्तिपर्यन्तं सभोज्यघटदानम् .... १४१
सौरवैशाखे प्रातःस्नानम् .... .... १४३
अक्षयतृतीयायां स्नानदानश्राद्धादिफलम् .... १४३
वैशाखशुक्लसप्तम्यां जाह्नवीपूजा .... .... १५३
पिपीतकद्वादशीव्रतम .... .... १५३
वैशाखपौर्णमासीकृत्यानि .... .... १५३
ज्यैष्ठकृत्यानि .... .... .... १५५
ज्यैष्ठकृष्णाष्टम्यां त्रिलोचनपूजा .... .... १५५
ज्यैष्ठकृष्णचतुर्दश्यां सावित्रीव्रतम् .... .... १५५
ज्यैष्ठशुक्लचतुर्थ्याम् उमापूजा .... .... १५८

| *Subject* | *Page* |
|---|---|
| अरण्यषष्ठी .... .... .... | १५८ |
| दशहरा .... .... .... | १५६ |
| ज्यैष्ठशुक्लद्वादश्यां पुरुषोत्तमदर्शनं विशोकापूजा च .... | १६२ |
| चम्पकचतुर्दशी .... .... .... | १६२ |
| मन्वन्तरादिः। तत्र तिलदानफलम् .... | १६२ |
| महाज्यैष्ठ्यां पुरुषोत्तमदर्शनफलम् .... .... | १६३ |
| आषाढकृत्यनिर्णयः .... .... .... | १६४ |
| अम्बुवाचीकृत्यानि .... .... | १६४ |
| तत्र तण्डुलजलेन शिरीषमूलपानं सर्पभयनाशनम् .... | १६५ |
| नवोदकश्राद्धम् .... .... .... | १६५ |
| आषाढशुक्लसप्तम्यां विवस्वान् पूजनीयः .... | १६६ |
| मन्वन्तरादिः .... .... .... | १६६ |
| हरिशयनम् .... .... .... | १६६ |
| चातुर्मास्यविधिः .... .... .... | १६७ |
| श्रावणकृत्यनिर्णयः .... .... .... | १७१ |
| श्रावणादिसौरमासद्वये नद्यो रजस्वलाः .... | १७१ |
| नदीलक्षणम् .... .... .... | १७२ |
| रजोदोषापवादः .... .... .... | १७२ |
| अशून्यशयना .... .... .... | १७३ |
| मनसापञ्चमी .... .... .... | १७४ |
| मन्वन्तरादिः .... .... .... | १७५ |
| भाद्रकृत्यनिर्णयः .... .... .... | १७६ |
| कृष्णजन्माष्टमी .... .... .... | १७६ |
| जन्माष्टमीव्यवस्थाकथने सप्तमीव्यवस्था .... | १८१ |
| जयन्तीकृत्यानि .... .... .... | १८५ |
| अघोरचतुर्दशी .... .... .... | १८८ |
| मन्वन्तरादिः .... .... .... | १८६ |
| भाद्रशुक्लचतुर्थ्यां चन्द्रादर्शनम् .... .... | १६० |

| *Subject* | *Page* |
|---|---|
| कृष्णचतुर्दशी हरिताली .... .... | १६० |
| नागपञ्चमी .... .... .... | १६१ |
| शुक्लाष्टम्यां दूर्वाष्टमीव्रतम् .... .... | १६१ |
| अस्यामेव लक्ष्मीव्रतारम्भः .... .... | १६२ |
| शुक्लैकादश्यां विष्णोः पार्श्वपरिवर्तः .... | १६२ |
| शुक्लद्वादश्यां शक्रोत्थानम् .... .... | १६२ |
| शुक्लचतुर्दश्याम् अनन्तव्रतम् .... .... | १६३ |
| अगस्त्योदयः .... .... .... | १६४ |

## श्रीनाथाचार्यचूडामणिविरचितः

# कृत्यतत्त्वार्णवः

श्रीगोविन्दपदाम्भोजद्वन्द्वमद्वन्द्वसाधनम् ।
वन्दे वृन्दारकधूलीमकरन्दमनोहरम् ॥१

श्रीकराचार्यपुत्रेण श्रीमच्छ्रीनाथशर्मणा ।
प्रीतये विदुषां चक्रे कृत्यकालविनिर्णयः ॥२

श्रौते विधौ कालकृतो विरोधः
प्रायः सदैव प्रथितो बुधानाम् ।
अतस्तदुच्छेदकृते मुनीनां
विचार्य वाचो विदधामि तत्त्वम् ॥३

नानाविदेशिविदुषां मतमाकलय्य
योदत्तमं यदभिलिख्य समर्पयामि ।
श्रद्धां बुधा विपथगड्डरिकाप्रवाहे
दूराद्विहाय कुरुतादरमत्र गाढ़म् ॥४

[1—12. All words from श्रीगोविन्दपदाम्भाज-, lost in SP.]

2. DC, DD वृन्दारकं धूली- ; the syllables -कधूली-, lost in DB. [The reading वृन्दारकधूली- is supported not only by better Ms. evidence but also by its parallel in the line 'वन्दे वृन्दावनचरमिन्दिरानन्दकन्दुकम्' of the opening verse of Śrīnātha's Dāna-candrikā. See Shastri and Gui, Calcutta Sanskrit College Catalogue, II, p. 585. For the reading वृन्दारकधूली- see also Mitra, Notices, II, pp. 361—2 (No. 986), wherein an incomplete Ms. of the Kṛtya-tattvārṇava has been noticed.] 5. DC, DD श्रौतविधौ. 8. DB, DE वाचोऽभिदधामि. 9. AS -विदेशविदुषां

इह खलु नित्यनैमित्तिकादियावद्वैदिककर्माणि तत्तत्कालविशेषाङ्गकानि श्रूयन्ते। ते च विशेषा वत्सरायणर्तुमासपक्षतिथिनक्षत्रादिरूपतया भिन्नाः, प्रत्येकं नानाप्रकाराः। कुत्र कर्मणि कीदृशस्याङ्गत्वमिति निर्णयमन्तरेण प्रवृत्तौ कदाचित् कर्मणो वैगुण्यमपि स्यादिति तन्निर्णयारम्भो युक्तः। अतएव व्यासः

तिथिनक्षत्रवारादिकालभागेषु यद्यदा।
विहितं वा निषिद्धं वा पालयंस्त्रिदिवं व्रजेत्॥

इति। अत्र विहितस्य निषिद्धस्य चाचरणानाचरणरूपपालनस्य फलश्रुतेः प्रधानतया तदुपकारकत्वेन तिथिनक्षत्रादीनामङ्गत्वं प्रतीयते। तदुक्तं गुरुणा

काले हि कर्म चोद्यते न तु कर्मणि कालः

इति। ननु कर्मणि कालस्याङ्गत्वमेव नास्ति, अतएवोक्तं

कालो न गुणः

इति। मैवम्। निरुपाधेः कालमात्रस्य नाङ्गत्वमिति तस्यार्थः, न तु तदुपाधेरपि नाङ्गत्वम्, कालविशेषविधिविरोधात्। यद्वा, गुणो गौणः, न गुणः किंतु मुख्यः, इतराङ्गापेक्षयेत्यर्थात्। अन्ये त्वितराङ्गवदधिकारिविशेषणतामनापन्नस्य कालस्य नाङ्गत्वम्, न तु कालोऽङ्गमेव न भवति कालशौचाधिकरणविरोधादित्याहुः॥

[1—15. All words in these lines, lost in SP.]

1. DB -कर्मणि. DC, DD, VSP -विशेषकाङ्गानि 2. DC, DD संवत्सरायण-. DB omits -पक्ष-. AS -नक्षत्ररूप-. 5. DB, DC -भेदेषु, AS -भोगेषु for -भागेषु. [For the reading -भागेषु see Kv, p. 3.] 7. VSP omits इति. AS omits च. VSP चाचरणरूप-. AS -रूपस्य for -रूपपालनस्य. 8. DA. -कारत्वेन। DC, DD यदुक्तं for तदुक्तं. 9. VSP चोच्यते. 12. AS, VSP नैवम् for मैवम्. VSP कालस्याङ्गत्वमिति. नाङ्गत्वमिति, lost in DA. DC (marginally), DD, VSP insert हि after नाङ्गत्वमिति. DD तत्तदुपाधेरपि. 13-14. DE omits all words from यद्वा to इतराङ्गापेक्षयेत्यर्थात्. 13. AS omits न गुणः किंतु. 14. DC -पेक्षयेत्यर्थः, DD -पेक्षयाभिन्नत्वात्, AS -पेक्ष इत्यर्थात्. DB, VSP insert इति after -पेक्षयेत्यर्थात्. AS च for तु (after अन्ये). DC, DD -विशेषणतासमापन्नस्य. DE omits कालस्य. 15. DE -करणकविरोधा-

## तत्र प्रथमं संवत्सरनिरूपणम् ॥

तत्र श्रुतिः

द्वादश मासाः संवत्सरः

( शतपथब्राह्मण १३.१.२.१, १३.२.१४.५, इत्यादि ) इति। मासश्चान्द्रसावनसौरनाक्षत्रभेदाच्चतुर्विधः। तदारब्धत्वाद्वत्सरोऽपि चतुर्विध इति। तदुक्तं विष्णुधर्मोत्तरे ( १.७२.१३-१६ )

चन्द्रमाः कृष्णपक्षान्ते सूर्येण सह युज्यते।
संनिकर्षादथारभ्य संनिकर्षमथापरम् ॥
चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते।
सावने च तथा मासि त्रिंशत्सूर्योदयाः स्मृताः ॥
आदित्यराशिभोगेन सौरो मासः प्रकीर्तितः।
सर्वर्क्षपरिवर्तैश्च नाक्षत्र इति चोच्यते ॥

अत्र यद्यपि मासशब्दस्य चान्द्रे यौगिकत्वं तथापि सौरादिषु त्रिषु रूढत्वात्

द्वादश मासाः ( शतपथब्राह्मण १३.१.२.१, इत्यादि )

इत्यत्र रूढ एव मासि संवत्सरपदं मुख्यमन्यत्र भाक्तमिति केचित्। तच्चिन्त्यम्। एवं मासशब्दस्य संवत्सरशब्दस्य चानुगतैकरूपाभावेनैकशक्तिविषयत्वासंभवे नानार्थत्वकल्पनागौरवात्। मासशब्दस्य च

[ 1—17. All words in these lines, lost in SP. ]

1. DB, AS, VSP वत्सर- for संवत्सर-. 3. DA वत्सरः. 4. VSP inserts च after मासः. DB transposes -सावन- and -सौर-. 5. DB, VSP omit इति. 11. The syllables सौरो मासः प्रकीर्ति-, lost in DB. 12. DC, DD चोद्यते. VSP inserts इति after चोच्यते. 13. DA चन्द्रे. DE सौरादित्रिषु. DC, VSP omit त्रिषु. DB रूढित्वात्. 14. DC, DD insert संवत्सरः after मासाः. 15. DB has lost the words ( some partially and some entirely ) between रूढ एव and भाक्तमिति. DC, DD मास- for मासि. DD -परत्वं for -पदं. DE तच्चिन्त्यमेव for 'तच्चिन्त्यम्। एवं'. 16. A few words and syllables between संवत्सर- and -संभवे, lost in DB. DA (after correction from -संभवे ) -संभवात्, DB -संभवेन for -संभवे. 17. DB, DC, DD, AS, VSP नानार्थकल्पना-. DA ( after correction from -गौरवात् ) -गौरवं स्यात् for -गौरवात्.

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः ।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥

इति क्लृप्तप्रयोगोपाधिसहकृतायोगादेव पङ्कजादिवत्प्रयोगोपपत्तौ रूढिकल्पनाया अन्याय्यत्वात् । सौरादिषु प्रयोगस्तु यौगिकसादृश्यसंबन्धपुरस्कारेण गौण्या लक्षणाया वोपपादनीयः । तदुक्तं भट्टपादैः

लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी ।
कल्पनीया तु लभते नात्मानं योगबाधतः ॥

इति । न चैवं रथकारादावपि क्लृप्तयोगबाधान्न रूढिस्वीकारः स्यात्तुल्यन्यायादिति वाच्यम् ।

माहिष्येण करण्यां तु रथकारः प्रजायते

( याज्ञवल्क्यस्मृति १.९५ ) इत्यनन्यथासिद्धशक्तिग्राहकप्रमाणबलात्तत्र रूढेरावश्यकत्वात् । न चात्रापि

आदित्यराशिभोगेन ( विष्णुधर्मोत्तर १.७२.१५ )

इत्यादिशक्तिग्राहकमानसत्त्वात्तुल्यमिति वाच्यम् । आदित्यराशिभोगावच्छिन्नत्वादेः सौरादिमासस्वरूपबोधनेनान्यथासिद्धयोक्तप्रमाणानां मासपदशक्तिग्राहकत्वानुपपत्तेः । तथा, एकैकः कल्पो ब्रह्मणो दिनं त्रिंशता कल्पैर्मास इति प्रस्तावे मत्स्यपुराणं ( २९०.६, १२ )

कौर्मः पञ्चदशो ब्रह्मन् पौर्णमासी प्रजापतेः ।
पितृकल्पस्तथान्ते तु या कुहूर्ब्रह्मणो मता ॥

[1—19. All words in these lines, lost in SP.]

3. DB प्रयोगापत्तौ. 4. VSP inserts इति after अन्याय्यत्वात्. DE omits -संबन्ध-. 5. DA inserts च after भट्टपादैः. 6. DB, DC, DD योगोपहारिणी. [For the reading योगापहारिणी see Kv, p. 25, Vk, p. 89, St I, p. 759, and so on.] 8. AS रथकारादपि. DB -परित्यागान्न for -बाधान्न. DC, DD रूढिः स्वीकारः. 8-9. DE -स्वीकारस्य न्यायादिति for the words from -स्वीकारः to इति 11. DE -ग्रहेण प्रमाण- for -ग्राहकप्रमाण-. VSP omits -प्रमाण-. 12. DB, AS insert तथा after चात्रापि. 14. DB -प्रमाण- for -मान-. AS आदित्यभोगविच्छिन्नत्वादेः. DB -भोगावच्छिन्नादेः. 15. DB -बोधनान्यथा-. DB, DC, DD, DE -सिद्धोक्त-. 16. DE ब्रह्मपुराणम्, VSP भविष्यपुराणम् for मत्स्यपुराणम्. 19. DB च for तु.

इति दर्शान्तस्यैव मासत्वं प्रतिपादयति। यदपि यत्किंचित्तिथ्यादित्रिंशत्तिथ्यात्मकेऽपि योगसंभवान्मासपदं यौगिकम्, अतएव मृततिथेर्मृततिथिं यावच्चान्द्र इति, अत्रैव मरीचिः

मुख्यं श्राद्धं मासि मासि

इति, तथा छन्दोगपरिशिष्टम्

एकाहेन तु षण्मासा यदा स्युरपि वा त्रिभिः।
न्यूनाः संवत्सरश्चैव स्यातां षाण्मासिके तदा॥

( कात्यायनस्मृति २४.६ ) इति, तथा याज्ञवल्क्योऽपि

मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्

( याज्ञवल्क्यस्मृति १. २५६ ) इति विमृष्टं तदपि न सुन्दरम्।

इन्द्राग्नी यत्र हूयेते

इत्यादिप्रयोगोपाधिबोधकप्रमाणेन मासशब्दस्य प्रयोगानुसारियोगत्वावधारणादुक्तवचनेषु मासशब्दे चन्द्रसंबन्धिस्वरूपे तिथिसमुदाये लक्षणैव। अतएव पङ्कजपदं पद्म एव नियतप्रयोगविषयतया तदनुभवजनितसंस्कारजस्मृत्युपनीतं पद्ममेव व्यक्तिवाचकड-प्रत्ययबलात् पङ्कजनिकर्तृतयानुभावयति। बाधकं विना व्यक्तिवचनानां संनिहितविशेषपरत्वनियमात्। प्रकरणादिसंनिहितर्गभिधायकाग्नेयीपदवत्। कुमुदे तु

[1—16. All words from in these lines, lost in SP.]

1. VSP omits एव ( after दर्शान्तस्य ). DC, DD insert इति after प्रतिपादयति. DA -त्तिथ्यारब्ध- for -त्तिथ्यादि-. DE, VSP omit -त्तिथ्यादित्रिंश- haplologically. 2. DB -पदस्य यौगिकत्वम् for -पदं यौगिकम्. VSP omits अतएव. DD omits मृततिथेः. 4. DC, DD मुख्यश्राद्धं 5. VSP omits तथा. DB inserts च after तथा. 7. DE, AS, VSP तथा for तदा. 8. DC, DD omit इति. 10. DA deletes सुन्दरम्. 12. VSP प्रयोगानुसंवियोग-. 13. DE मासशब्देन चन्द्र-. DB -वृद्धि-. for -संबन्धि-. AS -रूपे- for -स्वरूपे-. DB, DC, DD, VSP अर्थे समुदाये, DE तिथौ समुदाये, AS समुदाये for तिथिसमुदाये. 14. AS omits -प्रयोग-. DA -संस्कारजन्यस्मृत्युपनीतं. VSP -स्मृत्युपनीतपद्म-. 14-15. DB -वाचकप्रत्यय-, AS -वाचकताप्रत्यय-. 15. DB -कर्तृकतया-. 15-16 DB हतावशेष- for संनिहितविशेष-.

योगार्थपुरस्कारेण न प्रयोगोऽसाधुत्वात् । तात्पर्यवशात् क्वचित् कुमुदे प्रयोगो लक्षणादिनेत्युक्तम्,

मुख्यं श्राद्धं मासि मासि

इत्यादौ मासपदस्य दर्शान्तपरतया वक्ष्यमाणत्वाच्च । अतः सिद्धम्— चान्द्रेष्वेव द्वादशसु मासेषु संवत्सरशब्दो मुख्योऽन्यत्र भाक्त इति । यत्तु

यस्मिन्नब्दे द्वादशैकश्च यव्यः (कात्यायनस्मृति १६.८)

इत्यधिमासपाते त्रयोदशभिर्मासैश्छन्दोगपरिशिष्टकृता वत्सरपदं प्रयुक्तं तद्भाक्तम् ।

द्वादश मासाः संवत्सरः ( शतपथब्राह्मण १३.१.२.१, इत्यादि )

इति निष्प्रतिपक्षशक्तिग्राहकमानेन शक्तौ क्लृप्तायां तयैवोपपत्तौ नानार्थत्वकल्पनाया अन्याय्यत्वात् । अत्र कश्चित्

द्वादशैकश्च यव्यः ( कात्यायनस्मृति १६. ८ )

इत्यत्रापि संवत्सरपदं मुख्यमेव त्रयोदशापि मासा द्वादशैवैकसंज्ञत्वादेक एवाभ्यस्तो न पृथगसावित्यविरोधो

द्वादश मासाः संवत्सरः ( शतपथब्राह्मण १३.१.२.१, इत्यादि )

[ 1—14. All words in these lines, lost in SP. ]

3. DC, DD -मुख्यश्राद्धं. 4. AS -शब्दस्य for -पदस्य. DD, AS दर्शान्तपरतायाः. DC, DD अतएव for अतः. 5. DA, DE द्वादशमासेषु. VSP omits मासेषु. VSP संवत्सरो for संवत्सरशब्दो. 7. DC, DD -परिशिष्टकृतवत्सर- . AS संवत्सरपदं. DA प्रोक्तं (corrected illegibly on the margin) for प्रयुक्तं . 9. DB omits -शक्ति- . DC, DD, AS नानार्थकत्व-, DB, DE, VSP नानार्थ- for नानार्थत्व- . DE -कल्पनया. 10. DE inserts च before अन्याय्यत्वात् . DC, DD अन्याय्यकत्वात् . DC, DD, DE, AS, VSP insert इति after अन्याय्यत्वात् . 12. DB, DC, DD, DE, AS वत्सर- for संवत्सर- . DB, DC, DD, DE, AS omit मासाः. AS -संज्ञकत्वा-. DB एवात्यन्तो, VSP एव आद्यन्तो (?) for एवाभ्यस्तो. 13. DC ( before correction), DD पृथगवसर इत्यविरोधात्, but DC (after correction) पृथगुपाधिबोधो. DA, DB, VSP -विरोधात् for -विरोधो. [ Kv, p. 110 reads -विरोधो ].

इत्यत्रेति ( कालविवेक, पृ० ११० )। तन्मन्दम्। नहि माघत्वादिरूपेण द्वादशभिः संवत्सरो येन मकरार्कारब्धशुक्लप्रतिपदादित्रिंशत्तिथ्यात्मकत्वेनैक्याद्द्वादशत्वं किंतु शुक्लप्रतिपदादिदर्शान्तरूपद्वादशभिरेव, तथाभूतानां च त्रयोदशानामपि कुतो द्वादशत्वमिति।

वत्सरश्च संवत्सरपरिवत्सरेदावत्सरानुवत्सरोद्वत्सरभेदात् पञ्चविधः।

[ 1—5. All words in these lines, lost in SP. ]

1. DA inserts मासैः after द्वादशभिः। 2. DC, DD मकरारब्ध-. DE -त्रिंशत्तिथ्यात्मकं नैक्याद्द्वादशत्वं, VSP -त्रिंशत्तिथ्यारब्धत्वेनैक्याद्द्वादशत्वं-. DC, DD -द्द्वादशकत्वं. 3. DB -रूपवत्त्वाद्द्वादशभि-, VSP -रूपत्वाद्द्वादशभि-. AS omits अपि. 5. DB संवत्सरश्च for वत्सरश्च. AS -परिवत्सरेदवत्सरानु-. DB -वत्सरोदावत्सर- for -वत्सरोद्वत्सर-. DE omits -उद्वत्सर-. [ The names of the five kinds of the year are not always the same everywhere. For instance, in his Cc III. ii, p. 18 Hemādri gives the names of the year as संवत्सर, परिवत्सर, इदावत्सर, अनुवत्सर and उद्वत्सर on the authority of three lines quoted from the 'Brahmavaivarta-purāṇa', and on p. 831 quotes from the Viṣṇudharmottora a few verses which give the names as संवत्सर, परिवत्सर, इदावत्सर. अनुवत्सर and इद्वत्सर ; in his Kn, pp. 55-56 Mādhavācārya gives the same names as those mentioned in the second group above, on the authority of various works including the Viṣṇudharmottara; according to Vallālasena, who also quotes the Viṣṇudharmottara in his Ds, p. 657, the third name is इदावत्सर and the fifth, उद्वत्सर ; in his St I, p. 764 Raghunandana gives the five names, of which the fifth is उदावत्सर, on the strength of various authorities including the Viṣṇudharmottara ; in Vāyu-p. 31. 27-28 the names are given as संवत्सर, परिवत्सर, इद्वत्सर (also called इदावत्सर ?—cf. Vāyu-p. 31. 30), अनुवत्सर and वत्सर ; in Brahmāṇḍa-p. I. 13. 114-120 the names are given as संवत्सर, परिवत्सर, इड्वत्सर ( also called इडावत्सर ?—cf. Brahmāṇḍa-p. I. 13. 118), अनुवत्सर and वत्सर ; in Devī-p. 46. 37ff. the names are given as संवत्सर, परिवत्सर, सांवत्सर, अनुवत्सर and वत्सर ; in Viṣṇu-p. II. 8. 67 the names are given as संवत्सर, परिवत्सर, इद्वत्सर, अनुवत्सर and वत्सर ; and so on. ]

तदुक्तं

निखिलनृपचक्रतिलकश्रीमद्बल्लालसेनदेवेन ।
पूर्णे शशिनवदशमितशकवर्षे दानसागरो रचितः ॥
रविभगणाः शरशिष्टा ये भूता दानसागरस्यास्य ।
क्रमशोऽत्र संपरीदानूदाद्या वत्सराः पञ्च ॥

( दानसागर, पृ. ६५७ ) इति ॥

## अथायननिरूपणम् ॥

तत्रायनं सौरैर्माघादिभिः षड्भिरेकं श्रावणादिभिः षड्भिरपरमिति द्वयमेव । तदुक्तं विष्णुपुराणे ( २. ८. ६५ )

मासः पक्षद्वयेनोक्तो द्वौ मासावर्कजावृतुः ।
ऋतुत्रयं चाप्ययनं द्वेऽयने वर्षसंज्ञिते ॥

इति । तथा

कर्कटावस्थिते भानौ दक्षिणायनमुच्यते ।
उत्तरायणमप्युक्तं मकरस्थे दिवाकरे ॥

( विष्णुपुराण २. ८. ६३ ) इति । अयनपदं च गत्यर्थायधातोर्ल्युडन्तात् सिद्धमिति यौगिकमेव । दक्षिणासंबन्धाद्दक्षिणमयनं गमनं रवेः, एवमुत्तरमयनमिति योगाद्दक्षिणायनोत्तरायणपदयोर्यौगिकत्वमुचितमिति तेनैवोपपत्तौ न रूढिः, गौरवादिति ॥

[1—17. All words in these lines, lost in SP.]

1. VSP तद्व्यक्ती (?) for तदुक्तम्. 2. DB, AS -नृपतिचक्र-. DB -श्रीवल्लाल-. [The verse निखिलनृपचक्र- etc. occurs in Ds, p. 722 also. The Ds reads -भूप- for -नृप-]. 3. DB शशिनादश-. DB -शाकवर्षे, VSP -शाकेऽब्दे for -शकवर्षे. 8. DB अत्रायनं. VSP inserts मासैः after सौरैः. DE haplologically omits एकं श्रावणादिभिः षड्भिः. VSP omits इति द्वयम्. 15. DB, DC, AS -धातोर्युडन्ता-. 16. DE दक्षिणगमनं for दक्षिणमयनं गमनं. DD inserts एव after रवेः. DC, DD, DE, AS उत्तरायणम् for उत्तरमयनम्. 17. DB -पद-यौगिकत्व-, DE -पदं यौगिकत्व-. DB, DE, AS, VSP omit उचितम्. DB omits इति ( after उचितम् ).

## अथर्तुनिरूपणम् ॥

यत्किंचित्तिथ्यारब्धत्रिंशत्तिथ्यात्मकचान्द्रमासद्वयमात्रे ऋृतुशब्दशक्तिः,

मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुं प्रति

इति मरीचिवचनात्,

नवश्राद्धं दशाहानि नवमिश्रं तु षड्तून्

इत्याश्वलायनवचनाच्च ; अनयोर्हि मृततिथेर्मृततिथिं यावच्चान्द्रो मासस्तद्युग्मे ऋृतुशब्दः श्रूयते, मृततिथेश्चानियतत्वाद्यत्किंचित्तिथ्यारब्धचान्द्रद्वय एव ऋृतुशब्ददर्शनात्तत्रैव शक्तिर्निर्णीयते, बाधकाभावादिति केचित् । तच्चिन्त्यम् ।

द्वौ मासावर्कजावृतुः

इति विष्णुपुराणे (२.८.६५) श्रृङ्गग्राहिकया सौरमासद्वयस्य ऋृतुपदवाच्यत्वबोधनात्तद्बाधेन प्रयोगमात्राच्छक्तिकल्पनाया अन्याय्यत्वात्तस्य गौण्या लक्षणया वोपपाद्यत्वात् । अन्यस्तु

मुख्यं श्राद्धं मासि मासि

[1-13. All words in these lines, lost in SP.]

2. DE haplologically omits -रब्धत्रिंशत्तिथ्या-. DB -द्वयमात्र एव ऋतु-, AS -द्वय एव ऋतु-. 4. DD omits मरीचि-. 6. DC omits च. DB च for हि. AS omits हि. DD, DE insert यः after यावत्, but VSP inserts यः after चान्द्रो. 6-7. DB ऋतुशब्दशक्तिः श्रूयते, VSP ऋतुशब्दश्च श्रूयते 7. DB -त्तिथ्यारम्भकचान्द्र-. AS -चान्द्रमासद्वय एव. 8. AS शब्दशक्ति- for शक्ति-. AS omits केचित्. 10. DP, DC, DD, AS -ग्राहिकतया. AS -मासस्य for -मासद्वयस्य. DB -वाच्यत्वनियमात्, DC, DD -वाच्यत्वावधारणात्, AS -वाच्यत्वात् for -वाच्यत्वबोधनात्. 11. AS अस्य for तस्य. DC, DD लक्षणायाः. DA वोपपाद्यमानत्वात्, DB अप्युपपादनात्, DC, DD, DE वाप्युपपाद्यत्वात्, AS वा व्युत्त- (व्युत् ?) पाद्यत्वात्, VSP वाप्युपपाद्यमानत्वात् for वोपपाद्यत्वात्.

इत्यत्र

आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः

इति वचनाच्छुक्लप्रतिपदादिदर्शान्ते मास एव मासिकादीनां विधानात्ताद्दशमासद्वय एव ऋतुशब्दशक्तिरित्याह। तन्मन्दम्। आब्दिकपितृकृत्यपदस्य सांवत्सरिकपरत्वेन मासिकपरत्वानुपपत्तेः। अतएव लघुहारीतेन

अतः सांवत्सरं श्राद्धं कर्तव्यं मासचिह्नितम्

इति सांवत्सरिकस्यैव चान्द्रमासाङ्गकत्वमुक्तम्। मासिकेषु तर्हि कस्माद्वचनात् कीदृङ्मासोऽङ्गमस्त्विति चेत्, मासिकानां मृततिथिषु विहितत्वात्

चक्रवत्परिवर्तेत सूर्यः कालवशाद्यतः

इति हेतोरसंभवेऽपि मुख्यत्वाच्चान्द्रो दर्शान्त एवाङ्गमित्यवेहि।

विधौ तु मासि मासि

इत्यादिमासपदं मृततिथेर्मृततिथ्यन्तपरमेव, अन्यथा

एकाहेन तु षण्मासाः (कात्यायनस्मृति २४.६)

[1-13. All words in these lines, lost in SP.]

1. DE इति, VSP इत्यादि for इत्यत्र. 3. DC, DD insert च after वचनात्. DA -दशा- (दर्शा-?) न्ते मास एव, DB, DC, DD, DE -दर्शान्तमास एव, AS, VSP -दर्शान्त एव. 4. DB आब्दिके पितृकृत्य इति पदस्य, DC, DD आब्दिकमपि पितृकृत्यपदस्य. 4-5. DD --परत्वावपपत्तेः (haplologically omitting -त्वेन मासिकपर-) for -परत्वेन मासिकपरत्वानुपपत्तेः. 5. VSP अत्र for अतएव. 6. DB संवत्सरं. VSP मासि चिह्नितम्. 7. DB -मासाङ्गिकत्व-, AS -मासाङ्गत्व-. 8. VSP कीदृङ्मासस्त्विति DE omits अस्तु. DC, DD प्रतिमृततिथिषु. DE, VSP -तिथिविहित-. 10. For the words from इति हेतोः to इत्यवेहि DB reads : इति हेतोरविषयान्मृततिथ्यवधिकतदन्तगौणमाससंभवेऽपि मुख्यत्वाच्चान्द्रो दर्शान्त एवाङ्गमित्यवेहि, whereas DC, DD have: इति हेतोरविषयत्वात् संभवात् हेतोरविषयत्वात् संभवात् marginally corrected to हेतोरविशेषात् in DC) मृततिथ्यवधिकतदन्तो गौणो मास एवाङ्गमित्यवेहि। 11-12. DC, DD omit all words from विधौ to -तिथ्यन्तपरमेव. 12. DE -तिथ्यन्तरपरमेव, AS -तिथ्यन्तरमेव, VSP -तिथिपर्यन्तपरमेव for -तिथ्यन्तपरमेव. 13. DA, DE add यदा स्युः after षण्मासाः.

इत्यत्र वचने नियमेन चतुर्दश्यां द्वादश्यां वा पाण्मासिकप्रसङ्गादिति। अत्रोच्यते—

मुख्यं श्राद्धं मासि मासि

इत्यत्र पूर्वोक्तयुक्त्या मासपदं दर्शान्तपरमेव। तद्द्वय एव ऋतुशब्दशक्तिः। यत्किंचित्तिथ्यारब्धे मासशब्दस्यासाधुत्वात्। कुमुदे पङ्कजपदवत्। एवं

मृताहे प्रतिमासं कुर्यात् ( विष्णुस्मृति २१.११ )

इति विष्णुवचने, तथा

मृताहनि तु कर्तव्यं प्रतिमासं तु वत्सरम्

( याज्ञवल्क्यस्मृति १. २५६ ) इत्यादियाज्ञवल्क्यादिवचनेष्वपि मरणाशौचावधेर्यः शुक्लप्रतिपदादिदर्शान्तो मासस्तत्र मृततिथौ श्राद्धं प्रतिमासं कर्तव्यमित्येवार्थः। तत्रैव मासशब्दस्य यौगिकत्वस्य व्यवस्थापितत्वात्। न चैवम्

एकाहेन तु षण्मासाः ( कात्यायनस्मृति २४६ )

इत्यत्रापि दर्शान्तपरत्वे चतुर्दश्यां द्वादश्यां वा नियमतः पाण्मासिकप्रसङ्ग इति वाच्यम्। सपिण्डीकरणस्य मृताहविहितत्वनिश्चयेन तत्परतः पाणमासिककरणे

सपिण्डीकरणान्ता तु ज्ञेया प्रेतक्रिया बुधैः

इत्यादिप्रमाणबाधेन

[1-15. All words in these lines, lost in SP.]

1. DE omits अत्र (after इति). DC षाण्मासिककरणप्रसङ्गादिति (the word -करण- being written in the margin in different ink). DE inserts आह after -प्रसङ्गादिति. 2. DA मुख्यश्राद्धं. 3. DC, DD, DE, AS, VSP दर्शान्तमासपर-. DB, DC, DD, DE, VSP insert इति after -परमेव. DA ऋतुपद- for ऋतुशब्द-. 4. DC, DD -तिथ्यारब्धमासशब्द-. VSP मासपदस्या-. AS inserts इति after -साधुत्वात. DE, AS, VSP पङ्कजवत्. 5. DA प्रतिमासि. 6. DC, DD, DE omit तथा. 8. DC, DD मरणावधे-, DE, VSP मरणाशौचादवधे-, AS मरणादवधे-. 9. DA -प्रतिपदादिर्दर्शान्तो. DC, DD कर्तव्यमित्यर्थः, VSP कर्तव्यमिति निश्चित एवार्थः. 10. DA यौगिकत्वव्यवस्थापित-. 11. After षण्मासाः VSP adds यदा स्युरपि वा त्रिभिः. 12. VSP इत्यादिवचनेऽपि दर्शा-. AS, VSP नियतः षा-. 13. DB -विहितनिश्चयेन. AS तत्परषाण्मासिक-. AS inserts अपि after -करणे. 15. AS इत्यत्रापि प्रमाणबाधे.

पूर्णे संवत्सरे सपिण्डीकरणम्

इत्यादिप्रयुक्तस्य सपिण्डीकरणसमाप्यसंवत्सरस्यैवैकाहन्यूनत्वप्रतीतेः। तत्रागत्या क्लृप्ततात्पर्यानुरोधेन लक्षणया मृततिथ्यन्तत्रिंशत्तिथ्यात्मकमासो लक्ष्यते, ततश्च षाण्मासिक इत्यत्र सकृदुच्चारितषाण्मासिकपदस्य सपिण्डीकरणान्तसंवत्सरार्धपरत्वात् प्रथमेऽपि तथात्वमेवेति। किं च, स्वायत्ते शब्दप्रयोगे तत्तत्कालीनकृष्णचतुर्दशीमनभिधाय यत्

एकाहेन तु ( कात्यायनस्मृति २४.६ )

इत्यादि, बह्वक्षरसंदिग्धार्थपदप्रयोगस्यान्याय्यत्वमेवं स्यादिति। एवं

मृताहे प्रतिमासं कुर्यात् ( विष्णुस्मृति २१.११ )

इत्यादौ तु बाधकाभावान्मुख्यमासपरत्वमेवेति। अतएव ऋतुविशेषवाचकानामपि वसन्तादिपदानां चैत्रादिपदवाच्यदर्शान्तमासद्वयपरत्वं वक्ष्यमाणमुपपन्नमिति।

द्वौ मासावर्कजावृतुः ( विष्णुपुराण २.८.६५)

इति त्वयनारम्भकर्त्वभिप्रायं भाक्तमेव, न च वैपरीत्यम्।

द्वौ मासावर्कजावृतुः ( विष्णुपुराण २.८.६५ )

[1-14. All words in these lines, lost in SP.]

1-2. DE, AS omit all words from पूर्णे to -प्रतीतेः. 2. DB सपिण्डीकरणं सामान्यसंवत्सर एकाह-, DC, DD सपिण्डीकरणं समाप्य- (DD -प्त- for -प्य- ) त्वात् संवत्सरस्यैवैकाह-, VSP सपिण्डीकरणं समाप्यसंवत्सरस्यैवैकाह-. 2-3. DC, DD तत्रागत्याक्लृप्तत्वात् तात्पर्यानु-, VSP तत्रागत्या तत्क्लृप्ततात्पर्यानु-. 3. DC, DD -तिथ्यन्ते त्रिंशत्तिथ्या-. 3-8. DE, AS omit all words from ततश्च to स्यादिति, but AS reads instead : किं च, षाण्मासिकशब्दस्यैकाहन्यूनषण्मासविहितत्वेन गौणत्वं सर्ववादिसिद्धम्, ततश्च षष्ठद्वादशमासिकाभ्यां नियतक्रमानुरोधेन मृततिथ्यवधिकमृततिथ्यन्तपरत्वस्यैवौचित्यमिति. 4. DB सपिण्डनान्तसंवत्सरपरत्वात्, DC DD सपिण्डनान्तसंवत्सरार्धपरत्वात्. 5. VSP omits एव. DB omits इति. DC inserts तु after स्वायत्ते. DD आयत्तशब्दप्रयोगतत्कालीन-. 7. DC, DD omit तु. 8. DC, DD -संदिग्धपद-. DB -प्रयोगस्यासमर्थत्वमेव स्यादिति, DC, DD -प्रयोगस्याप्यन्याय्यत्वमेव स्यादिति. 9. VSP दद्यात् for कुर्यात्. 10. AS omits -मास-. 13. DA -रम्भकर्त्वभिधायकप्रायं.

इत्यस्याः स्मृतेः

तपस्तपस्यौ शैशिरावृतुः, मधुर्माधवश्च वासन्तिकावृतुः, शुक्रः शुचिश्च ग्रैष्मावृतुः। अथैतदुदगयनं देवानां दिनम्। नभा नभस्यश्च वार्षिकावृतुः, इषश्चोर्जश्च शारदावृतुः, सहाः सहस्यश्च हैमन्तिकावृतुः। अथैतद्दक्षिणायनं देवानां रात्रिः।

इति प्रत्यक्षश्रुतिमूलत्वमेव, मूलभूतश्रुत्यन्तरकल्पनायां गौरवात्। ततश्चायनारम्भकौ द्वौ द्वौ मासावेव माघफाल्गुनौ चैत्रवैशाखौ ज्यैष्ठाषाढावृतुशब्दवाच्यौ स्याताम्, तदा च ऋतुशब्दसामान्यस्य नैतच्छक्तिग्राहकम्। माघादियुग्मेष्वनुगतैकरूपस्याभावेन नानार्थत्वात्। अतो लाघवाच्चान्द्रमासद्वय एव शक्तिः।

द्वौ मासौ (विष्णुपुराण २. ८. ६५)

इति गौणायनारम्भकर्तुस्वरूपपरिचायकमात्रमिति। अतएव

द्वेऽयने वर्षसंज्ञिते (विष्णुपुराण २.८.६५)

इति

मासः पक्षद्वयेनोक्तः (विष्णुपुराण २.८.६५)

इति च तत्रैव गौणयोः सौरवर्षमासयोः स्वरूपपरिचायकमात्रं न तु शक्तिग्राहकम्। प्रागुक्तयुक्त्या वर्षमासशब्दयोश्चान्द्र एव मुख्यत्वावधारणात्। ननु

[ 1-16. All words in these lines, lost in SP. ]

1. DE omits अस्याः. DD omits स्मृतेः. 2. DB शिशिरावृतुः. DC, DD मधु for मधुः. DC, DD insert च after शुक्रः. DA शुचि for शुचिश्च. VSP omits च after शुचिः. 4. DB, DC, DD सहा for सहाः. DA inserts च after सहाः. 6. DC, DD -श्रुतिमूलत्वे संभवति श्रुत्यन्तर-. DA inserts इति वाच्यम् marginally after गौरवात्. 7. DB places एव before द्वौ द्वौ. DA -वाचकौ for -वाच्यौ. 8. AS omits च. DB, DC, DD, DE, AS omit -शब्द-. DE -ग्राहकत्वम्. 8-9. DA -युग्मेऽनुगतस्यैक-. 9. DB, DE -रूपाभावेन. 11. DB सौरायणारम्भक-, DC, DD गौणमेवायनारम्भक-, AS गौणायनान्तरारम्भक-. AS -परिचायकमिति. 15. DE omits तत्रैव. 16. VSP मुख्यत्वबोधनात् for मुख्यत्वावधारणात्.

त्रिंशन्मुहूर्तं कथितमहोरात्रं तु यन्मया ।
तानि पञ्चदश ब्रह्मन् पक्ष इत्यभिधीयते ॥
मासः पक्षद्वयेनोक्तो द्वौ मासावर्कजावृतुः ।

इति विष्णुपुराणे ( २. ८. ६४-६५ ) पक्षद्वयेन मास इत्यभिधानात् सावनमासे मासशब्दस्य रूढिः प्रतीयते, ततश्च रूढेर्योगस्य दुर्बलत्वात् कथं चान्द्र एव मुख्य इत्युच्यते ? न च वाच्यम्—माश्चन्द्रस्तस्यायं वृद्धिह्रासहेतुक्रियाप्रचयस्तदवच्छिन्नो वा कालः प्रतिपदाद्यमावास्यान्तत्रिंशत्संख्यतिथिसमुदाय एव क्लृप्तप्रयोगान्मासपद-वाच्यः, सावने तु रूढिः कल्प्या, क्लृप्तयोगो हि कल्प्यां रूढिं व्याहन्ति, क्लृप्तावयवशक्त्यैवोपपत्तौ समुदायशक्तिकल्पनायां गौरवादिति ।

मासः पक्षद्वयेनोक्तः ( विष्णुपुराण २.८. ६५ )

इति सावनमासस्वरूपमात्रबोधकं न तु शक्तिग्राहकमिति । यतो यत्र योगः क्लृप्तस्तत्र क्लृप्तावयवशक्त्यैव प्रयोगोपपत्तौ न समुदाये शक्तिः कल्प्यते, यथा पङ्कजादौ । यत्र तु न योगस्तत्र रूढिरावश्यकी, यथा रथकारपदस्य संकरजातिविशेषे । तद्वदिहापि । सावने क्लृप्तप्रयोगासंभवादनन्यथासिद्धशक्तिग्राहकमानबलाच्च मासशब्दस्य रूढिरेवेति । न च गौण्या लक्षणया व्यावृत्त्यान्यथासिद्धिरिति वाच्यम् , रथकारादावपि तथात्वा-पत्तेरिति । मैवम् । दैविकयुगादिप्रस्तावे

[ 1-16. All words in these lines, lost in SP. ]

3. DA -द्वयेनोक्तौ. 4. DA, DD, AS, VSP इत्यादि विष्णु- . DA -द्वये for -द्वयेन. DC, DD सावने मासे. 5. DC, DD insert च after -शब्दस्य. 6. DA omits च. DB, AS omit माश्चन्द्रस्तस्यायं. DA transposes -वृद्धि- and -ह्रास- . AS omits -हेतु- . DB transposes -हेतु- and -क्रिया- . 7. DB -त्रिंशत्तिथि-. VSP क्लृप्तप्रयोगा- . 8. DA omits तु. 9. DC क्लृप्तावयवनानाशक्त्यै- ( the word नाना being inserted in the margin in different ink ). 11. DE, AS omit -मात्र- . VSP repeats यत्र . 12. DB, AS समुदाय-शक्तिः . 13. DB प्रयोग- for योग- . DE inserts एव after रूढिः . 5. AS, VSP तदिहापि . 14. DB -संभवादन्यथा- . DE -प्रमाण- for -मान- . DB -वचनाच्च for -बलाच्च. DB inserts शक्तिः after -शब्दस्य. 15. DA व्यावृत्ता-, DE वृत्त्या-, VSP वावृत्या- for व्यावृत्त्या- . DD drops all words from -वृत्त्यान्यथासिद्धिरिति प्रविभाग-स्तयोः पुनः 16. AS नैवम् for मैवम् . DA -युग- for -युगादि- . DB -प्रसङ्गे for -प्रस्तावे.

त्रिंशन्मुहूर्तम्

इत्यादेर्विष्णुपुराणे- ( २.८.६४ ) ऽभिधानम् । दैविकश्च वत्सरः सौरवत्सरारब्ध-दिनात्मकत्वेन न सावनः ।

दैवे रात्र्यहनी वर्षः प्रविभागस्तयोः पुनः ।
अहस्तत्रोदगयनं रात्रिः स्याद्दक्षिणायनम् ॥

इति मनुवचनात् ( १.६७ ), अत्रैव

द्वौ मासावर्कजावृतुः ।
ऋतुत्रयं चाप्ययनं द्वेऽयने वर्षसंज्ञिते ॥

( विष्णुपुराण २.८.६५ ) इत्यभिधानाच्च । ततश्च

तानि पञ्चदश ( विष्णुपुराण २.८.६४ )

इति प्रायिकपञ्चदशात्मकत्वेन सौरपक्षपरम् ।

मासः पक्षद्वयेनोक्तः ( विष्णुपुराण (२.८.६५)

इत्यप्ययनारम्भकगौणसौरमासपरिचायकमात्रम् । अतएव

द्वौ मासावर्कजावृतुः ( विष्णुपुराण २.८.६५ )

इत्यपि गौणर्तुस्वरूपपरिचायकमात्रं न तु शक्तिग्राहकमिति ॥

[1-15. All words in these lines, lost in SP.]

2. AS इत्यादि for इत्यादेः. DE विधानम् for अभिधानम्. DE संवत्सर इति for वत्सरः. 4. DC वर्षे, VSP पक्षः for वर्षः. [ The different editions of the Manu-smṛti read वर्षं for वर्षः. See, for instance, (1) Manu-smṛti with the 'Manu-bhāṣya' of Medhātithi (ed. Ganganath Jha, Bibl. Ind., Calcutta, 1932) ; (2) Manu-smṛti with Kullūka-bhaṭṭa's com. (ed. Vāsudeva Śarman, Nirṇaya Sāgara Press, Bombay, 1933) ; (3) Vaṅga. ed. with Kullūka's com. ; and so on. The verse 'दैवे रात्र्यहनी etc.', as occurring in Bhaviṣya-p. I. 2. 91b-92a, also reads वर्षं. ] 6. DE omits मनु-. DB omits एव. 11. DE omits -पञ्चदशात्मक-. AS omits -पक्ष-. 13. DB omits अपि. 15. DE इत्यस्य गौणत्वात्तत्स्वरूप-

पक्षपदं तु मासार्धे मुख्यम्। अतएव पक्षमूलत्वात्प्रतिपदः पक्षतित्वमुपपद्यते। तदेवं मुख्यचान्द्रस्यार्धे शुक्लप्रतिपदादिपौर्णमास्यन्ते कृष्णप्रतिपदादिदर्शान्ते च पक्षपदं मुख्यम्, सौरसावननाक्षत्राणां गौणमासानामर्धेषु गौणम्। यथा

पक्षादयोऽभियष्टव्याः (गोभिलगृह्यसूत्र १.५.५)

इत्यादि गोभिलः। तथा

पक्षं वृद्धस्तु पूर्वेण दशाहं पश्चिमेन तु,
जीवस्तु पक्षमपि वृद्धशिशुर्विवर्ज्यः

इत्यादौ सावने, तथा,

गतेऽब्दद्वितये सार्धे पञ्चपक्षे दिनद्वये।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः॥

इति शाण्डिल्यवचने सौरे पक्षपदं दृश्यते। अत्र च

सौरसंवत्सरस्यान्ते मानेन शशिजेन तु।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन॥

[1-13. All words in these lines, lost in SP.]

1. Before पक्षपदं DA inserts अथ पक्षनिरूपणम्. VSP पक्षद्वयं for पक्षपदं. DC, DD पक्षादि- for पक्षति-. DB, DE insert अपि after पक्षतित्वम्. DB उत्पद्यते for उपपद्यते. 2. DA मुख्यचन्द्र-, DB, DC, DD, DE, VSP मुख्यस्य चान्द्र-. DC, DD insert मासस्य after -चान्द्रस्य. DA omits च. 3. VSP गौणानामर्धे-. DB अर्धे तु for अर्धेषु. 6. DD पूर्णेन for पूर्वेण. 7. DC, DD insert तथा before जीवस्तु. VSP इति for अपि. DC, DD, AS वृद्धः शिशु-. [For the reading वृद्धशिशुर्विवर्ज्यः see St I, p. 606.] 9. DB सार्धपञ्च-. 11. DB शाण्डिल्यवचनं सौरपक्षपरं, DC, DD शाण्डिल्यायनवचने सौरपक्षपदं for शाण्डिल्यवचने सौरे पक्षपदं. DB omits च. VSP तु for च. 12. DA, DC, DD, DE मासेन for मानेन. [For the reading मानेन see Viṣṇudharmottara I. 72. 21a, Kn, p. 68, Vk, pp. 227 and 387, Śk, p. 284, Śd-k, p. 237, and so on.]

इति विष्णुधर्मोत्तरवचने ( १. ७२. २१ ) सौरसंवत्सरान्त एवैकादशतिथिवृद्ध्याधिमासपातस्य सर्वसंमतत्वात् पक्षपदमपि सौरार्धमासपरमिति निर्णीयते। अतोऽन्यथासिद्ध्या

मासः पक्षद्वयेनोक्तः ( विष्णुपुराण २.८.६५ )

इत्यस्य न शक्तिग्राहकत्वम्, गौरवादिति ॥

अथ मासशब्दश्चान्द्र इव सौरसावननाक्षत्रेष्वपि यौगिक एव। माश्चन्द्रस्तस्यायं क्रियाप्रचयस्तदवच्छिन्नो वा काल इति व्युत्पत्त्या तस्य च तिथ्यादौ प्रयोगवारणाय प्रयोगोपाधिचतुष्टयं विष्णुधर्मोत्तरे उक्तम्, यथा

चन्द्रमाः कृष्णपक्षान्ते सूर्येण सह युज्यते।
संनिकर्षादथारभ्य संनिकर्षमथापरम्॥
चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते।
सावने च तथा मासि त्रिंशत्सूर्योदयाः स्मृताः॥
आदित्यराशिभोगेन सौरो मासः प्रकीर्तितः।
सर्वर्क्षपरिवर्तैश्च नाक्षत्र इति चोच्यते॥

( विष्णुधर्मोत्तर १.७२.१३-१६ ) इति। अत्र संनिकर्षादिति संनिकर्षपदेन सामीप्यलक्षणया शुक्लप्रतिपदारम्भक्षणो लक्ष्यते।

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः।
एकराशौ रविर्यावत्कालं मासः स भास्करः॥

[1-18. All words in these lines, lost in SP.]

1. DC, DD, AS omit एव. 2. DB च for अपि. DB -मासपक्षपरमेवेति for -मासपरमिति. 6. DB एव for इव. DB, AS माश्चन्द्रमा- for माश्चन्द्र-. 7. VSP transposes वा and कालः. DC, DD omit च. 7-8. DB प्रयोगधारणाय. 8. DE -धर्मोत्तरेण for °धर्मोत्तरे. DB तथा for यथा. 12. DB मासे. 14. VSP मास उच्यते for इति चोच्यते. 15. DB, VSP omit इति (before अत्र). DC, DD omit संनिकर्षादिति. 16. DC, DD -रम्भकक्षणो, AS -रम्भो for -रम्भक्षणो. DD वक्ष्यते for लक्ष्यते. 18. AS -राशिं for -राशौ. AS यावत् for मासः.

इत्यादिवचनैः शुक्लप्रतिपदादिताप्रतीतेस्तदेकमूलत्वे लाघवात् । ततश्च शुक्लप्रतिपदाद्यमावास्यान्तत्रिंशत्तिथ्यात्मकत्वं त्रिंशदहोरात्रावच्छिन्नत्वमादित्यैकराशिभोगावच्छिन्नत्वं सर्वर्क्षपरिवर्तावच्छिन्नत्वं च चतुर्षु चन्द्रसंबन्धिक्रियाप्रचयेषु प्रयोगोपाधय इति पङ्कजादिवत्सर्वत्रैव मासपदस्य यौगिकत्वेन तुल्यत्वात्कथं चान्द्र एव मुख्य इति ? अत्रोच्यते—

चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः ।
एकराशौ रविर्यावत्कालं मासः स भास्करः ॥

तथा

सर्वर्क्षपरिवर्तैश्च नाक्षत्र इति चोच्यते

( विष्णुधर्मोत्तर १.७२. १६ ) इत्यादीनां न मासशब्दप्रयोगनियामकत्वम्, मानाभावाद्गौरवाच्च ; किंतु

विवाहोत्सवयज्ञेषु सौरं मानं प्रशस्यते ।
पार्वणे त्वष्टकाश्राद्धे चान्द्रमिष्टं तथाब्दिके ॥

तथा

आब्दिके पितृकृत्ये च मासश्चान्द्रमसः स्मृतः ।
विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः ॥

[ 1-16. All words in these lines, lost in SP. ]

1. DC, DD, DE, AS -प्रमाणैः for -वचनैः. DA प्रतीयते for -प्रतीतेः. 2. AS आदित्यराशि-. 4. DB मासशब्दस्य. DE inserts इव after मासपदस्य. VSP inserts अपि after यौगिकत्वेन. 7. DB, DE insert इति after भास्करः. 8. VSP omits तथा. 9. VSP -परिवर्तैन नाक्षत्रो मास उच्यते. 10. VSP omits न. 11. AS इति for च. 12. DA सौरो मासः, DB सौरमानं, DC, DD सौरं मासं, DE सौरमासः for सौरं मानं. [ For the reading सौरं मानं see Kv, p. 7, St I. p. 747, and so on. Cf. also Śd-k, p. 238 which reads सौरमानं. ] 14. DB omits तथा.

तथा

नक्षत्रसत्रारायणयनानि चेन्दोर्मानेन कुर्यांद्गणात्मकेन

( विष्णुधर्मोत्तर १. ७२. २७) इत्यादिवचनैश्चान्द्रसौरसावननाक्षत्रमासोल्लेखेन कर्माणि विहितानि, तत्र कीदृशास्ते इत्याकाङ्क्षायां तत्स्वरूपवोधकत्वमेव। ततश्च शुक्लप्रतिपदादिदर्शान्तो यो मासश्चन्द्रसंवन्धी क्रियाप्रचयः स चन्द्रस्य वृद्ध्यारम्भकृत्स्नक्षयसमाप्यत्वाच्चान्द्रः । एवं सूर्यस्यैकराशिभोगावच्छिन्नो यश्चन्द्रस्य क्रियाप्रचयः स सौरः। एवं सावनैः प्रातर्मध्यंदिनसायमात्मकैरवच्छिन्नानि यानि त्रिंशदहोरात्राणि तदवच्छिन्नो यः क्रियाप्रचयः स सावनः। एवं नाक्षत्रोऽपि। ततश्च सर्वत्रैव मासमनूद्य तस्य चान्द्रत्वादिकमेव विधेयम्। स च मासरूपक्रियाप्रचये सर्वत्र न यौगिकः, पङ्कजादौ पद्मत्वादिवदनुगतप्रयोगोपाधिबोधकमानाभावात्, किंतु

इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्तितः।
अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ॥

इत्यादिलघुहारीतवचनाच्छुक्लप्रतिपदादिदर्शान्ततिथिपरिमितक्रियाप्रचय एव। अन्यत्र त्वप्रयोगादसाधुः, कुमुदादौ पङ्कजपदवत्। अतः सौरादिक्रियाप्रचयेषु समुदाये लक्षणा।

[ 1-15. All words in these lines, lost in SP. ]

3. DB, DC -नाक्षत्रोल्लेखेन. 4. DB तत्स्वरूपानुवोधकमेव. DB omits च. 5. DB -संवन्धिक्रिया-. DE omits सः. DC, VSP वृद्धारम्भ-, DE वृद्ध्यारम्भक- for वृद्ध्यारम्भ-. 6. VSP सूर्य एकराशि-. DB, AS transpose चन्द्रस्य and क्रियाप्रचयः. DC, DD सूर्यस्य for चन्द्रस्य. 7. DC, DD सावनस्य for सावनैः. DC (before correction), DD -सायंत्वात्मकावच्छिन्नानि यानि त्रिंशदहोरात्राणि, but DC (after correction) -सायंत्वात्मकावच्छिन्ना ये त्रिंशदहोरात्राः for the words from -सायमात्मकैः to त्रिंशदहोरात्राणि. 8. AS चन्द्रक्रिया- for क्रिया-. 9. DA omits तस्य. 10. VSP पद्मादि- for पद्मत्वादि-. DB, DE -बोधकप्रमाणाभावात्. 13. DB इति for इत्यादि-. DE -हारीतादिवचना-. VSP omits -दर्शान्त-. AS omits -तिथि-. DE -प्रचयपरमेव for -प्रचय एव. 14. DA प्रयोगादसाधुः, DB प्रयोगोऽसाधुः for त्वप्रयोगादसाधुः. DB पङ्कजत्वादिवत्, AS, VSP पङ्कजवत्. 14-15. For समुदाये लक्षणा DB has समुदाय with a blank space after it, whereas DE has समुदायलक्षणा.

मासः पत्तद्वयेनोक्तः ( विष्णुपुराण २.८.६५ )

इत्यादेस्तु न प्रयोगनियामकत्वम्, उक्तयुक्तेः। एवं रथकारेऽपि संज्ञाविधि-प्रकरणादेव रूढिस्वीकारः। अतएव मलमासाधिमासपदानि सर्वत्र चान्द्रपराण्येव। न च

इन्द्राग्नी यत्र हूयेते

इत्यतदपि मलमासोपयोगिमासस्वरूपबोधकमेव न तु प्रयोगोपाधिबोधकम्, अतएव तदनन्तरमेव

तमतिक्रम्य

इत्यादिना मलमासस्वरूपमुक्तम्, ततश्चत्वार एवोपाधय इति वाच्यम्।

संनिकर्षादथारभ्य ( विष्णुधर्मोत्तर १. ७२. १४ )

इत्यादीनामनुवादकत्वेनोपाधिविधायकत्वाभावात्।

इन्द्राग्नी यत्र हूयेते

इत्यत्र तु मासादिः

समाप्तौ

इति कीर्तनादुपाधिरेव। न चैवं मासस्य चन्द्रक्रियारूपत्वे तस्य चान्द्रत्वविधानं

[1-15. All words in these lines, lost in SP.]

1. DA मासद्वयेनोक्तः. 2. DC उक्तमेव, DD उक्तमेवं for उक्त-. 3. After चान्द्र-पराण्येव DB, DC, DD insert: किंच, मासविशेषपराणां कार्त्तिकादिपदानां दर्शान्त एव मुख्यत्वस्य सर्ववादिसिद्धत्वेन मासशब्दस्यापि दर्शान्त एव मुख्यत्वस्यौचित्यम् ( DB औचित्यात for औचित्यम् ), न तु सौरादाविति, repeating the passage in its proper place (see *infra.*). 6. DB omits तु. 7. DB अत एतदनन्तर-. AS omits एव ( after तदनन्तरम् ). 9. DD omits मल-. DC, DD, DE, AS, VSP अतः for ततः. 12. DC, DD, AS omit हूयेते. 13. DB इत्यादौ, DC, DD इत्यादि for इत्यत्र. 15. DC, DD, DE, AS, VSP उपाधिविधिरेव for उपाधिरेव. AS omits न चैवं. VSP चैतन्मासस्य for चैवं मासस्य. DE क्रियास्वरूपत्वे, VSP चन्द्रक्रियाप्रचयास्वरूपत्वे for चन्द्रक्रियारूपत्वे.

पिष्टपेषणमिति वाच्यम्। चान्द्र इत्यनेन चन्द्रसंवन्धोपाधिमात्रप्रयुक्तो न चान्द्रः किंतु संनिकर्षादितदन्तावच्छिन्न एव, अतस्तत्पर्यायमासपदस्यापि न चन्द्रसंवन्धिमात्रे योगिकत्वमित्यस्यैव तात्पर्यस्य जागरूकत्वात्। यत्र तु क्वचिच्चान्द्रादिपदं मासविशेषणतया श्रूयते, तन्निरूढलक्षणाया मुख्यतुल्यत्वेन सौरादिमासव्यावर्तनाय पैष्टी सूरेत्यादिवदिति तत्त्वम्। किंच, मासविशेषपराणां कार्त्तिकादिपदानां दर्शान्त एव मुख्यत्वस्य सर्ववादिसिद्धत्वेन मासशब्दस्यापि दर्शान्त एव मुख्यत्वस्यौचित्यम्, न तु सौरादाविति। अतः सिद्धम्—ऋतुपदं दर्शान्तमासद्वयमात्रे मुख्यमिति। वसन्तादिपदानामपि तत्रैव शक्तिः, ऋतुविशेषाणामेव वसन्तादित्वात्। अतएव भागुरिः

वसन्तश्चैत्रवैशाखौ ज्ञेयौ तौ मधुमाधवौ।
ज्यैष्ठाषाढावृतुर्ग्रीष्मस्तौ च शुक्रशुची स्मृतौ॥
प्रावृट् श्रावणभाद्राख्यौ नभोनभस्यसंज्ञितौ।
मासौ शरदिषोर्जौ तु तावाश्वयुजकार्त्तिकौ॥

[1-13. All words in these lines, lost in SP.]

1. DB, AS -पेषणवैफल्यमेवेति, DC, DD -पेषणमेवेति. DB -संबन्ध्युपाधिमात्र-, DC, DD -संवन्धिक्रिया- (DD -क्रियात्व- for -क्रिया-) मात्र-. DB inserts इति after चान्द्रः. 2. DB -कर्षादिति तदन्ता-. After एव DC, DD insert चान्द्रव्यवहारविषय इत्यर्थे पिष्टपेषणाभावादिति, but in DC these words have been deleted by enclosing them within brackets drawn in different ink. DB, DE, AS, VSP तत- for अत-. VSP -स्तत्पर्याय एव मास-. DD, VSP -शब्द- for -पद-. DC, DD omit अपि. DB omits न. DC, DD चान्द्र- for चन्द्र-. 3. DB, VSP -संबन्धिमात्रयौगिक-. VSP तात्पर्यजागरूकत्वात्. DB अत्र for यत्र. DB, DE omit तु. 4. DC, DD-लक्षणया, VSP -लक्षणायां. 5. VSP सुरादि- for सुरेत्यादि-. DE omits तत्त्वम्. 6. DB -संमतत्वेन for -सिद्धत्वेन. 7. DB, AS insert इति after औचित्यम्. DE सौरादिरिति, AS सौरादिष्विति. DA अपि for इति after सौरादौ. 8. DB -द्वयमात्रमुख्यमिति, DE -द्वये मुख्यमिति, AS -द्वये मुख्यम् (omitting इति). DC, DD, AS, VSP -शब्दा- for -पदा-. DB अपि for एव following. -विशेषाणाम्. 11. DE, AS -ऋतुर्ग्रैष्म-. DE शुक्ल- for शुक्र-. 13. VSP च for तु.

सहःसहस्यौ हेमन्तो मार्गपौषौ तु तौ मतौ।
तपस्तपस्यौ शिशिरस्तौ मासौ माघफाल्गुनौ॥

अत्र दर्शान्तमासवाचकमधुमाधवादिसामानाधिकरण्याद्वसन्तादिपदानामपि दर्शान्त एव शक्तिर्निश्चीयते इति। ननु

तद्वै वसन्त एवारभ्यारभते वसन्तो वै ब्राह्मणस्य
य उ वै कश्चन यजते ब्राह्मणीभूय यजते
तस्माद्वसन्त एव स्यात्। यासौ फाल्गुनी पौर्णमासी
भवति तस्या एव पुरस्तात्षड़हे वर्त्विज उपसमानयन्ति।

इत्यश्वमेधप्रकरणस्थशातपथश्रुतौ (१३.२.१४.३) पौर्णमास्यन्ते वसन्तपदप्रयोगात् तद्विरोधेन भागुरिस्मृतेर्बाधात् कथं ततः शक्तिनिर्णय इति? मैवम्।

वसन्ते वै ब्राह्मणोऽग्नीनादधीत

इति श्रुत्याधानकालत्वेन वसन्तो विहितः।

सा वैशाखस्यामावास्या या रोहिण्या संबध्यते, तस्यामादधीत

इति श्रुत्यन्तरे च वृषभोग्यरोहिणीनक्षत्रयुक्तामावास्यायां वैशाखपदप्रयोगाच्छ्रुति-

[1-14. All words in these lines, lost in SP.]

1. VSP च for तु. DC, DD स्मृतौ for मतौ. 2. DA मतो for मासौ. [For the reading मासौ see Kv, p. 14.] 3. DB. -माधवादिमासानधिकरण्या-. DE तत्र for दर्शान्त-. 4. AS निर्णीयते for निश्चीयते. DB, DC DD, DE, omit इति (after निश्चीयते). 5. DB तत्रैव सर्व- for तद्वै वसन्त-. 6. For य उ वै कश्चन DA has य तद्वै कश्चन (?), DB यत वै कश्चन (?), DC (after correction) यो वै कश्चन, AS वडसंकश्च (?). 8. DC, DD वर्त्विक् समानयन्ति. 9. VSP इत्यश्वरोधप्रकरण-. DB -प्रकरणे शतपथश्रुतौ, AS -प्रकरणस्थशातपश्रुथीतौ, VSP -प्रकरणस्थशातातपश्रुतौ. VSP पौर्णमास्ये for पौर्णमास्यन्ते. DA omits -पद-. 10. DC DD, DE, AS, VSP बाध्यत्वात् for बाधात्. DC, DD अत्र for ततः. DC, DD, DE शक्तिर्निर्णीयते, VSP शक्तिर्निर्णयः for शक्तिनिर्णयः. 11. DB omits वै. DB ब्राह्मणोऽग्निरादधीत, AS ब्राह्मणोऽग्निमादधीत. 12. DD omits -काल-. DE -कल्प- for -काल-. 13. DC, DD insert सह after रोहिण्या. 14. DA -युक्तायाममावास्यायां. VSP inserts च after -प्रयोगात्.

द्वयैकवाक्यतया चान्द्रवैशाखेऽपि वसन्तादिप्रयोगस्य श्रौतत्वादिति। न च तथापि तुल्यबलश्रुतिद्वयबोधितार्थयोर्विकल्प एवेति वाच्यम्।

तद्वै वसन्त एवारभ्यारभते ( शतपथब्राह्मण १३.२.१४.३ )

इत्यादिश्रुतौ प्रयोगमात्रस्यान्यथासिद्धत्वेन शक्तिग्राहकत्वाभावात्। तथाहि,

वै. यतस्तदश्वमेधाख्यं कर्म वसन्त आरभ्यारभते करोति

तस्माद्वसन्त एव तत्कर्म स्यात्॥

अथ वसन्तः किं मुख्यो गौणो वेत्यत्राह—

यासौ फाल्गुनी ( शतपथब्राह्मण १३.२.१४.३)

इत्यादि। अतएव महर्षिणा भागुरिणा श्रुतिद्वयार्थमवधार्य

वसन्तश्चैत्रवैशाखौ

इत्यादिना दर्शान्त एव चैत्रादिपदवाच्ये मासद्वये वसन्तादिपदानां शक्तिर्नियमितेति। अतएव

मधुश्च माधवश्च

इत्यादिश्रुतौ सौरे मधुमाधवादौ वसन्तपदप्रयोगे सत्यपि न सौरमासद्वयपरत्वम्,

[ 1-14. All words in these lines, lost in SP. ]

1. DB -पदानां, AS -पदस्य for -प्रयोगस्य. DB तु for च. DB inserts श्रुतत्वात् after तथापि. 2. DA omits -बल-. DE- द्वयस्य बोधितान्वयो-, AS -द्वयविरो (बो ? )-धितार्थयो-. 3. DB, DC, DD, AS omit आरभते after एवारभ्य. 5. For यत- AS has only य with a little blank space after it. 7. VSP वेति तत्राह. 9. VSP inserts अपि after भागुरिणा. 11. DA repeats the entire passage from -दिना दर्शान्त एव (line 11) to सैवेयमुक्तेति वाच्यम् ( see *infra.*, p. 25, line 7 ) but encloses the original passage within brackets. For चैत्रादिपदवाच्ये VSP reads चैत्रवैशाखपदवाच्यत्वादिति चैत्रपदवाच्ये. DB, DD -पदवाच्यमास- . VSP inserts एव after मासद्वये. 13. AS मधुमाधवश्च for the whole line. 14. DB VSP इति for इत्यादि- . AS omits -पद-.

पौर्णमास्यन्तस्य सौरस्य च मासस्य चैत्रवैशाखादिपदवाच्यत्वादिति। अथ सौरे पौर्णमास्यन्तेऽपि मासे चैत्रादिपदप्रयोगस्याविशेषात् कथं दर्शान्त एव शक्तेर्निश्चयः? यथा सभापर्वणि (२३.२९-३०)

कार्त्तिकस्य तु मासस्य प्रवृत्तं प्रथमेऽहनि।
अनाहारं दिवारात्रमविश्रान्तमवर्तत॥
तद्वृत्तं तु त्रयोदश्यां समवेतं महात्मनोः।
चतुर्दश्यां निशायां तु निवृत्तो मागधः क्लमात्॥

इति। अत्र कार्त्तिकस्य प्रथमेऽहनि त्रयोदश्याः सौरं विनासंभवात् सौर एव कार्त्तिकपदं निश्चीयते। तथा

तपस्तपस्यौ

इत्यादिश्रुतावपि

[1-11. All words in these lines, lost in SP.]

1. DC, DD insert किंतु before पौर्णमास्यन्तस्य, and च after it. DE पौर्णमास्यन्तसौरस्य. For the words from सौरस्य to -वाच्यत्वादिति VSP reads वैशाखिपदा only. DC, DD omit -पदवाच्य-. DA omits सौरे in the original passage but has it in the repetition. 1-2. VSP सौरपौर्णमास्यन्तमासे. 2. DB, AS omit -पद-. DE, VSP omit -प्रयोग-. DC, DD, AS शक्त निर्णयः. DB, DC, DD insert इति after शक्तेर्निश्चयः. 4. DE च for तु. DA (in the repetition), DB प्रवृत्ते for प्रवृत्तं. [Kv, p. 15 reads प्रवृत्ते.] 6. DC, DD तदूर्ध्वं, AS -उद्वृत्तं. for तद्वृत्तं. 7. DA चतुर्दश्या निशायां. DB निवृत्तौ. DC मागधक्लमात्. [The verses कार्त्तिकस्य तु and तद्वृत्तं तु occur in the Southern recension of the Mahābhārata (ed. P. P. S. Shastri and published by V. Ramaswamy Sastrulu and sons, Madras, 1932) with v.l. अनारतं for अनाहारं, तद्युद्धमासीच्च तयोः for तद्वृत्तं तु त्रयोदश्यां, and पञ्चदश्यां निशायां तु प्रहीणात्माभवत् क्लमात् for चतुर्दश्यां etc. See Vol. III (Sabhā-parvan), chap. 23, verses 23, 59a, 60a and 61. In the Bombay and the ASB edition (Sabhā-parvan 23.29-30) there is no v.l.]. 8. DC, DD omit इति. VSP omits अत्र. AS कार्त्तिकप्रथमे-. 9. AS omits तथा. 10. After तपस्तपस्यौ DA, DE, VSP add शै- (DE, VSP शि- for शै-) शिरावृतुः.

दिवा ज्ञाते संक्रान्तिप्राक्कालीनं दिनान्तम्, तत्पर्यन्तं पुण्यकालस्त्रिंशद्दण्डा इत्यर्थः।

त्रिंशन्नाडिका दिनमानम्

इति ज्योतिर्विदः। एतच्चानागतातीतदण्डानां पुण्यत्वं तत्रैवोक्तम्। यथा

षडशीतिमुखेऽतीते वृत्ते च विषुवद्वये।
भविष्यत्ययने पुण्यमतीते चोत्तरायणे॥
(देवीपुराण २४,१६)

उत्तरायणपदोपादानादयने दक्षिणायन इत्यर्थः। अस्मादेव वचनात्

अर्वाक् षोडश विज्ञेया नाड्यः पश्चात्तु षोडश।
कालः पुण्योऽर्कसंक्रान्तेर्विद्वद्भिः परिकीर्तितः॥
संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः।
अतीतानागतो भोगो नाड्यः पञ्चदश स्मृताः॥
(देवीपुराण २४,७)

1. DD संजाते for ज्ञाते. DE, AS -प्राक्कालीनदिनान्तम्. DA omits दिनान्तम्. AS, VSP omit तत्पर्यन्तं. After इत्यर्थः DC, DD, AS, VSP (marginally within brackets) insert : यद्वा भास्करे निरंशे दृष्टे दिवेति यावत्, and SP inserts यद्वा भास्करे with a blank space after भास्करे. 2. DB दिनम् for दिनमानम्. 3. DA एतच्चागतातीत-, AS एतच्चातीतानागत- for एतच्चानागतातीत-. DB तथा for यथा. 4. DB विषुपद्वये. 5. DB inserts इति after चोत्तरायणे. 7. DB inserts अपि after -दानादयने. SP दक्षिणायनम् for दक्षिणायने. 8. DE त्रयोदश for तु षोडश. VSP च for तु. [8-9. The verse अर्वाक् षोडश etc. is the same as Laghu-Śātātapa-smṛti, verse 146.] 9. DA, DD, DE, SP insert इति after परिकीर्तितः. 10. AS inserts तथा before संक्रान्तेः. DC कालाः for कलाः. DC, SP, VSP insert इति after कलाः. 11. DA, DE, AS, SP अतीतानागतो भागो, DB अतीतानागते भोगो, DC, DD अतीतानागता भागो. [The reading भोगो is found in Vk, p. 207 and St I, pp. 142 and 150 and II, p. 5. In the Devī-purāṇa the line reads अतीतानागता भोगा नाड्यः etc.]

इति शातातपजाबालदेवीपुराणवचनैर्यदुभयतोवर्तिकालानां पुण्यत्वमुक्तं तत्षडशीत्यादिष्ववकाशमलभमानं दिवा विष्णुपद्यां बोद्धव्यम्। दिवा विषुवषडशीतिसंक्रमणे तु मानार्धमेव पञ्चदश दण्डाः पुण्यकालः। तदुक्तं

मानार्धं भास्करे पुण्यमपूर्णे शर्वरीदले।
संपूर्णे चार्धरात्रे च उदयेऽस्तमयेऽपि वा॥
अर्धरात्रे त्वसंपूर्णे दिवा पुण्यमनागतम्।
संपूर्णे तूभयोर्ज्ञेयमतिरेके परेऽह्नि॥

(देवीपुराण २४.१४-१५) इति। भास्करे तदुपलक्षिते दिवेति यावत्। एतच्च पारिशेष्याद्दिवाविषुवद्वयषडशीतिविषयम्। अपूर्णे शर्वरीदलेऽर्धरात्रात्पूर्वं संक्रमणेषु द्वादशस्वेव मानार्धं पुण्यमित्यनुषज्यते। तथा, संपूर्णेऽर्धरात्रे संक्रमणेषूदये चास्तमये च मानार्धं पुण्यम्। तच्च पूर्वदिनपरदिनयोरेव सांनिध्यात्,

संपूर्णे तूभयोर्ज्ञेयम् (देवीपुराण २४.१५)

1. AS वचनैर्यदुभयवर्ति-. DC, DD, DE -कलानां for -कालानां. DA inserts इति after पुण्यत्वम्. 2. SP विष्णुपदीसंक्रान्तिविषयं for विष्णुपद्यां. DB विषुप- for विषुव-. 3. VSP पञ्च for पञ्चदश. DB, SP पुण्यकालाः for पुण्यकालः. After पुण्यकालः DC, DD insert: तत्त्रिंशद्दण्डा दिनमानमिति ज्योतिःशास्त्रवचनात्. 4. DE मानार्धे भा-. 5. SP च for वा. 8. DB, DC, DD तदुपलक्षितदिवेति. 9. DB -विषुप- for -विषुव-. DE omits -द्वय-. AS -रात्रात्पूर्वसंक्रमणेषु. 10. DA inserts दिवा after द्वादशस्वेव. DC अनुषज्यति for अनुषज्यते. DA inserts तु after संपूर्णे. VSP omits च preceding अस्तमये. DA अस्तसमये, VSP अस्तमये for चास्तमये. 11. DB, AS एतच्च for तच्च. SP पूर्वपरदिन-, VSP परदिनपूर्वदिन- for पूर्वदिनपरदिन-. AS omits all words from तच्च पूर्वदिन- to वक्ष्यमाणवचनाच्च (on p. 59, line 1).

इति वक्ष्यमाणवचनाच्च। अपूर्णार्धरात्रसंक्रमणे यन्मानार्धमुक्तं तत्कस्य दिनस्योदयेऽस्तमये च मानार्धम्, किमेकदिनस्य दिनयोर्वा, अर्धरात्रात्परतः संक्रान्तौ च कस्मिन् दिने पुण्यमित्यत्राह

अर्धरात्रे तु ( देवीपुराण २४.१४ )

इत्यादि। दिवा पुण्यं मानार्धमित्यर्थः। तच्चानागतम्। अनागतसंक्रान्तिसंबन्धित्वादनागतम्। तेन पूर्वदिनपरमानार्धं पुण्यमित्युक्तम्, तदैव संक्रान्तेरनागतत्वसंभवात्। उभयोरित्युभयोर्दिनयोर्मानार्धमित्यर्थः। अतिरेकेऽर्धरात्रात्परतः संक्रान्तिषु परेऽहन्युदयावधि मानार्धं पुण्यमित्यर्थः। एतेषु पुण्यकालेषु विहितनिषिद्धकर्मणामाचरणानाचरणानि कार्याणीत्यर्थः। संपूर्णार्धरात्रसंक्रान्तौ यदुभयदिनस्य पुण्यत्वमुक्तं तत्पूर्वदिवसीयतिथेर्भिन्नतिथित्वे सतीत्याह

आदौ पुण्यं विजानीयाद्यद्यभिन्ना तिथिर्भवेत्।
अर्धरात्रे व्यतीते तु विज्ञेयं चापरेऽहनि ॥

1. SP haplologically (?) omits all words from वक्ष्यमाणवचनाच्च to इति preceding यदुक्तं (on p. 60, line 4). DC, DD, संपूर्णार्ध-, VSP असंपूर्णार्ध- for अपूर्णार्ध-. AS -संक्रमे यन्माना-. 1-2. AS -स्योदयास्तमये. 2. DB, DE, AS अपि for च. VSP omits च. DB, AS किमेकस्य दिनस्य. DB omits दिनयोर्वा leaving a blank space for these words. DE दिनद्वयोर्वा for दिनयोर्वा 3. DA वा for च. VSP omits च. Before कस्मिन् DA marginally inserted a word or words which has or have been lost. DA इत्याह, AS इत्यत आह for इत्यत्राह. 5-6. DA -संबद्धत्वेनाचरणात्, DE -संबन्धात् for -संबन्धित्वात्. 6. DB inserts एव after तेन. AS पूर्वदिन अपर-. DC, DD omit -पर-. DA, DB -मानार्धपुण्य-. VSP अत्रैव for तदैव. DB पुण्यमित्युत्तरसंक्रान्ते-, DE पुण्यमित्युक्त्वा तदैव संक्रान्ते-. 7. VSP अतिरेकमर्ध-. 8. AS omits पुण्यम्. AS एषु विहितविहितपुण्यकालेषु for एतेषु पुण्यकालेषु. DE, VSP insert च after एतेषु. 9. DA आचरणानि for आचरणानाचरणानि. DA संपूर्णार्धरात्रे संक्रान्तौ. DA तदुभय- for यदुभय-. 12. AS omits च

( देवीपुराण २४.१७ ) पूर्वदिवसीयैव तिथिर्यदि संक्रान्तिकाले भवति तदा पूर्वदिनस्योत्तरार्धमेव पुण्यम् , न परस्य पूर्वार्धम् । एवं च

उभयोर्ज्ञेयम् ( देवीपुराण २४,१५ )

इति यदुक्तं तद्भिन्नतिथित्वे इत्यर्थादुक्तम् । एवमर्धरात्रात्परतोऽपि संक्रमणेऽभिन्नतिथित्वे पूर्वदिनोत्तरार्धस्य पुण्यत्वप्रसक्तावाह

अर्धरात्रे व्यतीते तु ( देवीपुराण २४.१७ )

इत्यादि । एवं द्वादशानामेव संक्रान्तीनां दिवातनीनां नक्तंतनीनां च व्यवस्थोक्ता । संध्यासंक्रान्तावाह

त्रिचतुःपञ्चसप्ताष्टनवद्वादश एव च ।
क्रमेण घटिका ज्ञेयास्तत्पुण्यं रविसंक्रमे ॥

( देवीपुराण २४.६ ) इति । मन्दादिसप्तविधासु द्वादशस्वेव संध्यासंक्रान्तिषु त्रिचतुरादिघटिकानां पुण्यकालत्वम् । मन्दादयश्च तत्रैवोक्ताः

1. DC, DD, AS omit एव after पूर्वदिवसीया. DA संभवति for भवति. DA, VSP -दिवस- for -दिन- . 2. AS, VSP omit एव ( after उत्तरार्धम् ). AS परदिनस्य for परस्य. 4. DA -तिथित्वे इत्यर्थत्वादुक्तम् , DC, DD -तिथित्वमित्यर्थादुक्तम् , AS -तिथिविषयम् for -तिथित्वे इत्यर्थादुक्तम् VSP संक्रमणे भिन्न- . 5. AS पूर्वदिनस्योत्तरार्धस्य, VSP पूर्वदिनोद्भवार्धस्य. 6. DA omits तु . 7. DB इति for इत्यादि . After इत्यादि DC, DD insert : व्यतीतेऽर्धरात्रे पूर्वेणाह्ना तिथ्यभेदेऽपि संक्रमणे परदिने सौरपूर्वार्धं पुण्यम् . AS द्वादशसंक्रान्तीनां . DD omits दिवातनीनां . DA inserts च after दिवातनीनां . DB omits च ( before व्यवस्थोक्ता ). 8. AS -संक्रान्त्यामाह for -संक्रान्तावाह . 9. SP त्रिश्चतुः- for त्रिचतुः- . 10. DB ज्ञेया, VSP ख्याताः for ज्ञेयाः . DA -संक्रमः for -संक्रमे 11. DC, DD मन्दादिषु, सप्त- . AS -सप्तधा द्वादश- . AS omits संध्या- . DB omits त्रि- . 12. DE -घटिकादीनां . SP पुण्यत्वम् for पुण्यकालत्वम् . DE, VSP omit च (after मन्दादयः).

मन्दा मन्दाकिनी ध्वाङ्क्षी घोरा चैव महोदरी ।
राक्षसी मिश्रिता चैव संक्रान्तिः सप्तधा नृप ॥
मन्दा ध्रुवेषु विज्ञेया मृदौ मन्दाकिनी तथा ।
क्षिप्रे ध्वाङ्क्षीं विजानीयादुग्रे घोरा प्रकीर्तिता ॥
चरैर्महोदरी ज्ञेया क्रूरैर्ऋक्षैस्तु राक्षसी ।
मिश्रिता चैव विज्ञेया मिश्रितर्क्षैश्च संक्रमे ॥

( देवीपुराण २४.३-५ ) इति । तत्र ध्रुवाणि त्रीण्युत्तराणि रोहिणी च, मृदूनि चित्रानुराधामृगशीर्षरेवत्यः, क्षिप्राणि हस्ताश्विनीपुष्याः, उग्राणि पूर्वात्रयं मघा भरणी च, चराणि श्रवणादित्रयं पुनर्वसुः स्वाती च, क्रूराणि मूलार्द्राश्लेषाज्येष्ठाः, मिश्रं कृत्तिका विशाखा च । अत्रापि

षडशीतिमुखेऽतीते ( देवीपुराण २४.१६ )

इति वचनात्पूर्वोत्तरकालव्यवस्थापवादाविषयत्वाद्विष्णुपद्यामुभयत इति । एवं च

द्वादशैव समाख्याताः समाः संक्रान्तिकल्पना

( देवीपुराण २४.२ ) इति यदुक्तं तदपि मन्दादिरूपतया दोषगुणजनकतया च वोद्धव्यम् । अयनादिरूपतया वैषम्यस्योक्तत्वात् । तथा

1. DA, DC, DD ध्माक्षी (?) DE व्याक्षा (?) for ध्वाङ्क्षी. 3. DB ध्रुवे च for ध्रुवेषु . 4. DC, DD ध्माक्षीं (?), DE ध्माङ्क्षं for ध्वाङ्क्षीं . 5. VSP ध्रुवैः for क्रूरैः . DB, DC, VSP च for तु . 6. AS तु for च after मिश्रितर्क्षैः . 7. DB, AS, VSP omit इति. AS omits तत्र . 8. DB -मृगशिरा-, AS -मृगशिरो- for -मृगशीर्ष- . 9. DB, VSP श्रवणात्रयं . DA omits च after स्वाती. 10. DB मिश्रितं for मिश्रं . 12. DC, DD -कालस्य व्यवस्था- . SP inserts विज्ञेया after -व्यवस्था. DA -व्यवस्था विषय- . 13. For द्वादशैव समाख्याताः समाः DB reads द्वादशैव समा with a blank space after समा . 15. SP तथा च for तथा .

मन्दा विप्रजने शस्ता मन्दाकिन्यस्तु राजनि ।
ध्वाङ्क्षी वैश्येषु विज्ञेया घोरा शूद्रे शुभप्रदा ॥
महोदरी तु चौराणां शौण्डिकानां जयावहा ।
चाण्डालपुक्कसानां तु राक्षसी क्रूरकर्मणाम् ॥
सर्वेषां कारुकाणां तु मिश्रिता धृतिवर्धनी ॥

( देवीपुराण २४.१७ ग-छ ) इति । तथा ज्योतिषे

यदाह्नि मेषसंक्रान्तिस्तुलासंक्रमणं निशि ।
तदा प्रजा विवर्धन्ते धनधान्यसमृद्धिभिः ॥
कुजार्कशनिवारेण महासंक्रमणं यदा ।
तदा भवेत्प्रजानाशो दुर्भिक्षाग्निभयं तथा ॥

तथा देवीपुराणे

रविसंक्रमणे पुण्ये न स्नायाद्यस्तु मानवः ।
सप्तजन्मस्वसौ रोगी निर्धनश्चोपजायते ॥
संक्रान्त्यां यानि दत्तानि हव्यकव्यानि मानवैः ।
तानि तस्य ददात्यर्कः सप्तजन्मानि विस्तरम् ॥

1. AS omits शस्ता. DA च, SP अथ for तु. 2. DA, DB ध्माङ्क्षी, DC, DD ध्माक्षी (?) for ध्वाङ्क्षी. DB शस्ता च for विज्ञेया. 3. DB, DC च for तु. 4. DB, DC. DD चण्डाल. SP -पुक्कसादीनां रा-. DC, DD, VSP च for तु. 5. DB, DC, DD, VSP च for तु. DB, DE, AS, VSP धृतिवर्धिनी, DC, DD भूतिवर्धिनी, SP तु शुभप्रदा for धृतिवर्धनी. 6. SP, VSP omit इति 7. DA -संक्रान्तितुला-. 8. After -समृद्धिभिः SP inserts marginally: "वसन्ते च भवेद्रात्रौ शारदे च दिवा भवेत्। दुर्भिक्षं वज्रसंपातं सस्यहानिर्विनिर्दिशेत् ॥". 10. DC, DD, DE, AS, SP, VSP दुर्भिक्षादिभयं. [ For the reading दुर्भिक्षादिभय' see Vk, p. 211. ] [ 12-15. These four lines are not found in the Vaṅga. ed. of the Devī-purāṇa. ] 12. DA यदि for यस्तु. 13. DB निर्धनश्चापि जायते. [ 13-14. Cf. Laghu-śātātapa-smṛti, verse 147. ] 15. DA, DC, DD -जन्मनि विस्तरम्, DB -जन्म निरन्तरम्, AS -जन्मसु विस्तरम्.

तथा संक्रान्ति प्रकृत्योक्तम्

एकधापि कृतं तस्मिन्कोटिकोटिगुणं भवेत् ।
धर्माद्विवर्धते ह्यायूराज्यपुत्रसुखादयः ॥
अधर्माद्व्याधिशोकादि विषुवायनसंनिधौ ।
विषुवेषु च यत्तप्तं दत्तं भवति चाक्षयम् ॥
एवं विष्णुपदे चैव षडशीतिमुखे तथा ॥
(देवीपुराण २४.१०-१२)

शङ्खः

शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः ।
महाजया तदा प्रोक्ता सप्तमी भास्करप्रिया ॥
तस्यां दानं जपो होमः सर्वमक्षयमुच्यते ॥

अक्षयमिति यावदाहूतसंप्लवकालीनफलकमित्यर्थः । तथा ज्योतिःशास्त्रम्

अयने कोटिगुणितं लक्षं विष्णुपदीफलम् ।
षडशीतिसहस्रं तु षडशीत्यामुदाहृतम् ॥

1. SP संक्रान्तिकृत्योक्तम्. 3. DB प्रवर्धते, VSP हि वर्धते for विवर्धते. VSP चायूराज्यं पुत्र-. DC, DD -धन- for -राज्य-. [Though for -सुखादयः the correct reading should be -सुखादि च, the Ms evidence is unanimously in favour of the former reading. In St II, p. 6 the reading -सुखादि च is found.] 5. DC, DD यद्य (ज्ज ?) प्तं, SP, VSP यद्दत्तं for यत्तप्तं. SP सर्वं, VSP जप्तं for दत्तं. 6. AS विष्णुपदी for विष्णुपदे. 11. DE, VSP तपो for जपो 12. DB यावदाहूतकालीनफलदातृत्वम्, AS यावदाहूतसंप्लवम् for the whole phrase यावदाहूत etc. DC, DD, AS, SP ज्योतिःशास्त्रे, DE, VSP ज्योतिषे for ज्योतिःशास्त्रम्.

विषुवे शतसाहस्रमाकामावेषु चाक्षयम् ॥

आषाढी-कार्त्तिकी-माघी-वैशाखीषु पूर्णिमास्वक्षयं स्नानादिकमित्यर्थः ।

अयने विषुवे चैव यः स्नायाज्जाह्नवीजले ।
गङ्गास्नानस्य वर्षार्धकृतस्य फलमाप्नुयात् ॥

तथा

योऽभिवीक्षेत विषुवे गत्वा श्रीपुरुषोत्तमम् ।
रामं कृष्णं सुभद्रां च स वैष्णवपुरं व्रजेत् ॥

तथा जातूकर्ण्यः

संक्रान्त्यां पञ्चदश्यां च द्वादश्यां श्राद्धवासरे ।
न पीडयेत्स्नानवस्त्रं नापि क्षारेण योजयेत् ॥

तथा

संक्रान्त्यां च त्रयोदश्यां पक्षान्ते नवमीतिथौ ।
सप्तम्यां रविवारे च स्नानमामलकैस्त्यजेत् ॥
तैलं मांसं मैथुनं च वर्जयेत्पर्वत्वादिति ॥

1. DB, DE, AS, VSP अनन्तकम् for चाक्षयम्. [Though the evidence of the Mss DA, DC, DD and SP and the use of the word अक्षयं in line 2 go in favour of the reading चाक्षयम्, the reading अनन्तकम्, which is found in Kv, p. 382, A-com., p. 292, Ds, p. 34, Sp, fol. 1b, Vk, pp. 245 and 214, St I, p. 145 and II, pp. 424-5, and so on, is more popular.] 2. DA, SP insert च after -वैशाखीषु. DE -वैशाखीपूर्णिमा-. VSP पूर्णिमादिष्वक्षयं. AS स्नानदानादिक-. Ms DE ends with स्नानादिकमित्यर्थः. 6. DC (after correction) वैशाखे for विषुवे. SP गङ्गां वा for गत्वा श्री-. 7. DB inserts इति after व्रजेत्. 11. VSP omits तथा. 14. AS तैलमांसमैथुनं VSP त्यजेत् for वर्जयेत्. DD drops पर्वत्वादिति. DC omits इति.

अत्र च श्राद्धं पार्वणविधिना कर्तव्यम्,

ततः प्रभृति संक्रान्तावुपरागादिपर्वसु ।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि ॥

इति मत्स्यपुराण-( १८,२२-२३ ) वचनात्। अत्र

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते ॥
वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य च ।
श्राद्धं कार्यं तु शुक्लायां संक्रान्तिविधिना नरैः ॥

( ब्रह्मपुराण २२०,५३-५५ ) इति मुनिनामशून्यं पठित्वा संक्रान्तिविधिना पिण्डरहित-विधिनेति यत्केनचिदुक्तं तदमूलम्। समूलत्वे वा पिण्डदानतदभावयोर्विकल्प इति केचित्। अत्र चोपवासोऽपि पुण्यकालावच्छिन्नाहोरात्रेऽयनविषुवादौ पुत्र-वद्गृहिव्यतिरिक्तेन विधेय इति प्रतीयते। निषिद्धमपि मांसतैलादि पुण्यकाल एव। अत्र रात्रौ सर्वस्यामेव संक्रान्तौ दिवैव पुण्यकालस्योक्तत्वात्।

1. DA, VSP omit च. DB, DC कार्यम् for कर्तव्यम्. AS inserts इति after कर्तव्यम्. 2. DC, DD सांक्रान्त्याम् for संक्रान्तौ. 4. DB -पुराणोक्त-वचनात्, VSP -पुराणात् for -पुराणवचनात्. DA, VSP अत: for अत्र. DC, DD, AS, SP insert च after अत्र. 5. DB विषुपद्वितये. 6. DB, DC omit च. 7. DB inserts ततः and AS तथा before वैशाखस्य. 8. DA च for तु. 9. DC, DD insert च before मुनिनाम-. DA रहितविहित- for पिण्डरहित-. 10. DB -विधानेन for -विधिना (after पिण्डरहित-). DB omits यत्. DB, SP तन्निर्मूलम्, AS तन्न युक्तम्, VSP तन्न युक्तममूलत्वात् for तदमूलम्. SP अपि for वा. DA inserts अपि after वा. DC inserts एव after विकल्पः. 11. DB, VSP omit च. DB अयने विषुवादौ, VSP अयनादौ for अयनविषुवादौ. 12. AS omits -गृहि-. DB, DC, DD, AS -व्यतिरेकेण for -व्यतिरिक्तेन. 13. DB omits अत्र. SP सर्वसंक्रान्तौ for सर्वस्यामेव संक्रान्तौ.

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु ।
स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च ॥

इत्यादिना संक्रान्तिनिमित्तकस्नानश्राद्धादि यद्रात्रावुक्तं तद्दिवासंक्रमणेष्वेव रात्रिप्रविष्ट-पुण्यकालांशे वोद्धव्यमिति ॥

## अथ ग्रहणनिर्णयः ॥

तत्र विष्णुधर्मोत्तरे ( १.४२.४२-४५ ) राहुं प्रति देववाक्यं

पर्वकाले तु संप्राप्ते चन्द्रार्कौ छादयिष्यसि ।
भूमिच्छायागतश्चन्द्रं चन्द्रगोऽर्कं कदाचन ।
संछादयिष्यसि यदा तदा भावमवाप्स्यसि ॥
स्नाने दाने तथा जप्ये होमे श्राद्धे सुरार्चने ।
पुण्यः स कालो भविता नित्यमेवासुरेश्वर ॥

अत्र च पर्वकाल इति श्रवणादौत्पातिकापर्वग्रहणस्य न श्राद्धादिनिमित्तता ।
अत एव

पौर्णमासीप्रतिपत्संधौ राहुग्रस्ते निशाकरे

1-4. VSP omits all words from राहुदर्शनसंक्रान्ति- to बोद्धव्यमिति. 2. DB -व्रतादिषु for -व्रतेषु, च. 3. SP इत्यादि for इत्यादिना. 5. DA ग्रहणनिरूपणम्, DC, DD ग्रहणश्राद्धादिनिर्णयः for ग्रहणनिर्णयः. 7. AS च for तु. 8. DB, DC भूमेश्छाया-. 9. VSP omits the entire line संछादयिष्यसि etc. 12. SP ग्रहणात् for श्रवणात्. 14. DA पौर्णमास्यां प्रतिपत्-.

इत्यादिवाक्यरचनाचार इति। तथा मार्कण्डेयः

चन्द्रे वा यदि वा सूर्ये दृष्टे राहौ महाग्रहे।
अक्षयं कथितं पुण्यं तत्राप्यर्के विशेपतः॥

( विष्णुधर्मोत्तर ३.३००.२४ ) इति। तथा

सर्वस्वेनापि कर्तव्यं श्राद्धं वै राहुदर्शने।
अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति॥
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम्।
गुणवत्सर्वकामीयं पितॄणामुपतिष्ठते॥
( विष्णुस्मृति ७७.६ )

अत्र सर्वस्वेनापीत्यभिधानाच्छ्राद्धस्यावश्यकत्वमुक्तम्। एषु वचनेषु दर्शनपदश्रवणाद्राहुचक्षुःसंयोगजज्ञानमेव स्नानादिनिमित्तम्, न तु तद्योग्यताविवक्षा। मानाभावात्। अत एव जावालः

1. SP इति for इत्यादि-. After इति DC, DD insert: "गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम्। तत्फलं समवाप्नोति राहुग्रस्ते निशाकरे। तदेव शतसंख्यं तु राहुग्रस्ते दिवाकरे॥ इति". DA, DC, DD मार्कण्डेयपुराणे for मार्कण्डेयः. [The verse चन्द्रे वा यदि वा सूर्ये in lines 2-3 is ascribed to the Viṣṇudharmottara in Ds, p. 35 and to 'Mārkaṇḍeya'((Mārkaṇḍeya being the speaker in the Viṣṇudharmottara) in Kv, p. 521, A-com., p. 427, Mp, p. 525, St I, pp. 154 and 162, and so on.] 2. DA, DB, DC, DD, AS राहुमहाग्रहे. [For the reading राहौ महाग्रहे see Kv, p. 521, A-com., p. 427, Ds, p. 35, Mp, p. 525, Vk, p. 113, St I, pp. 154 and 162, and so on.] 3. VSP तथाप्यर्के. DC, DD विशेष्यते for विशेषतः. [5-6. The verse सर्वस्वेनापि कर्तव्यं, which is not found in the Viṣṇu-smṛti, is ascribed to Śātātapa in Kv, p. 526, Sc II, p. 622 and IV, p. 26, Śv, pp. 96-97, Vk, p. 93, Śd-k, p. 219, and so on; to the Liṅga-purāṇa in A-com., p. 430 and Mp, p. 538; and to the Mahābhārata in Kn; p. 350 and Pbh II, i, p. 6.] 8. SP -कालीनं for -कामीयं. 10. DC सर्वात्मनापि for सर्वस्वेनापि. VSP श्राद्धमावश्यकमुक्तम्. 11. AS तत्र for राहु-.

संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः ।
चन्द्रसूर्योपरागे तु यावद्दर्शनगोचरः ॥

इति । दर्शनयोग्य इत्यर्थः । तद्योग्यता तु राहुचन्द्रसूर्यसंयोग एव । अतो राहुदर्शने तद्विषयकचाक्षुषज्ञाने सति राहुचन्द्रादिसंयोगावच्छिन्नकालपर्यन्तं स्नानादि-कमक्षयमिति पर्यवसितार्थः । ततो दृष्टोपरागस्य मेघच्छन्नेऽपि तस्मिन् गणिताव-गतमुक्तिकालपर्यन्तं श्राद्धाद्यप्रत्यूहमेव । निमित्तमपि दर्शनं स्नायादिति तिङन्तो-पस्थापितस्य कर्तुः सांनिध्यात्तन्निष्ठमेव । लाघवात् । अतोऽन्धस्य भिन्नकर्तृक-दर्शनज्ञानेऽपि न स्नानाद्यधिकारः । अत्र चार्कग्रहणदर्शनस्य महाभ्युदयहेतुत्वेन विहितत्वात् ।

नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन ।
नोपसृष्टं न वारिस्थं न मध्यं नभसो गतम् ॥

इति मनुवचने (४.३७) उपसृष्टदर्शननिषेधो रागप्राप्तद्वितीयवारादिदर्शननिषेधपरः, निषेधस्य वैधेतरविषयत्वादिति । अत्र ज्योतिःशास्त्रं

सप्ताष्टजन्मशेषेषु चतुर्थे दशमे तथा ।
नवमे च तथा चन्द्रे न कुर्याद्राहुदर्शनम् ॥

1. DB, VSP कला for कलाः. 2. AS च for तु. 3. DA च for तु. DC, DD तु दृष्टराहु-. DB इति for एव. 4. DB तद्विषयचाक्षुष-. DB, SP राहुचन्द्रसूर्य-, VSP चन्द्रादि- for राहुचन्द्रादि-. 4-5. DB, SP स्नानदानादिक-. 5. DC, DD, VSP insert च after ततः. 5-6. DB, DC, DD गणितागत-, AS गणितशास्त्रावगत-. 6. DB -यु (मु ?) क्तिदर्शनकाल- for -मुक्तिकाल-. DB, VSP इत्यादि- for इति. 6-7. DA (after marginal correction from तिन्तोपस्थितस्य) तिङोपस्थितस्य, VSP तिङन्तोपस्थितस्य. 7. DA (after correction from अब्दस्य) अन्यस्य for अन्धस्य. 8. DB, DC omit न. DD, SP चार्कग्रहणस्य महा-. 12. DC, DD इति वचनेनोपसृष्टदर्शने निषेधो राग-. 12-13. DA रागपरिप्राप्तद्वितीयावारादिदर्शननिषेधस्य for the words from रागप्राप्त- to निषेधस्य. 12. VSP -दर्शनपरः. 13. VSP वैधेतरत्वादिति. 14. SP जन्माष्टसप्तशेषेषु for सप्ताष्टजन्मशेषेषु.

तथा

जन्मसप्ताष्टरिप्फाङ्कदशमस्थे निशाकरे।
दृष्टो रिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि च॥

इति। रिप्फं द्वादशस्थानम्, अङ्को नवमस्थानम्, निधनं सप्तमतारा। एषु च ग्रहणदर्शने पुण्यमपि न जायते। राहुदर्शनं स्नानादिनिमित्तमिति सामान्यविधेः सप्तमाष्टमादिचन्द्रकालीनराहुदर्शनं रिष्टजनकमिति विशेषविधिविषयेतरविषयकत्वात् पदाहवनीयन्यायादिति। प्रपञ्चितमिदमस्माभिर्विवेकार्णवे (पः ४१-), विस्तरभिया नेह वितत्याभिहितमिति।

अत्र च

चन्द्रसूर्यग्रहे नाद्यादद्यात्स्नात्वा विमुक्तयोः।
अमुक्तयोरस्तं गतयोर्दृष्ट्वा स्नात्वा परेऽहनि॥

इति देवलवचनाद् ग्रहणकाले भोजनं न कार्यम्।

2. DC, SP -रिफ्फाङ्क-, VSP -ऋप्फाङ्क- for -रिप्फाङ्क-. 3. DA, VSP दृष्टोऽरिष्ट-. 4. DB omits इति. DC, DD, SP रिफ्फं, VSP ऋप्फं for रिप्फं DA अङ्कं नवम-. SP सप्ततारा DC, AS omit च. 4-5. DC, DD एषु च चन्द्रग्रहणदर्शने. 6. DC, AS सप्ताष्टमादि-, DD सप्तमादि-. DB -चन्द्रग्रहणकालीन-. DB, DC रिष्टमिति, SP निषिद्धमिति for रिष्टजनकमिति. DB, DC, DD -विषयत्वात् for -विषयकत्वात्. 7. VSP पदाहवनीयमिति न्यायादिति. AS -न्यायवदिति for -न्यायादिति. DA -भयात् for -भिया. 8. DC deletes वितत्य. 9. DA omits च. [10-11. Cf. Laghu-vyāsa-saṃhitā 2. 80b-81a; Laghu-śātātapa-smṛti, verse 152; Kūrma-p. II. 19. 15b and 16b.] 10. DA चन्द्रसूर्ययोर्ग्रहे. 11. DA स्नात्वाऽपरेऽहनि. 12. VSP कर्तव्यम् for कार्यम्.

चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ।
ग्रहणं तु भवेत्तत्र तत्पूर्वां भोजनक्रियाम् ॥
नाचरेत्सग्रहे चैव तथैवास्तमुपागते ।
यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु ॥
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा परेऽहनि ॥

इति विष्णुधर्मोत्तर- ( २,६३,१-२ ) वचने सग्रह इति श्रुतेः । अतो भविष्यतीत्यध्याहारोऽन्याय्य एव । अत्र

तत्पूर्वाम् ( विष्णुधर्मोत्तर २,६३,१ )

इत्यभिधानाद्भविष्यत्यपि ग्रहणे तद्दिने भोजनं निषिद्धम्, तत्रेत्यभिधानात् । अत्र सामान्यत उक्तेऽपि

नाद्यात्सूर्यग्रहात्पूर्वमह्नि सायं शशिग्रहात्

इति कामधेनुलिखितवचनात्सूर्यग्रहे दिवा तत्पूर्वं न भुञ्जीत, चन्द्रग्रहे रात्रौ तत्पूर्वं न भुञ्जीतेति ज्ञेयम् । एकश्रुतिमूलत्वे लाघवात् । एवम्

अहोरात्रं तु नाश्नीयाच्चन्द्रसूर्यग्रहो यदा ।
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥

2. DA तत्पूर्वांशे, DC, DD AS तत्पूर्वं for तत्पूर्वां. [ 5. The line मुक्तिं दृष्ट्वा etc. is not found in the Viṣṇudharmottora. ] 7. AS inserts अपि after अध्याहारः. DA omits अत्र. 8. As तत्पूर्वम् for तत्पूर्वाम्. DC, DD add भोजनक्रियाम् after तत्पूर्वाम्. 9. AS omits अपि. VSP अह्नि for तद्दिने. 11. DB -ग्रहे पूर्व-. SP दिवा for अह्नि. [ This line is the same as Laghu-vyāsa-saṃhitā 2.80a.] 12. SP -धेनुकारवचनात्सूर्य-. DB -ग्रहणे दिवा. SP भोक्तव्यं for भुञ्जीत. DB चन्द्रग्रहणे for चन्द्रग्रहे. 12-13. AS haplologically omits all words from चन्द्रग्रहे to भुञ्जीत. 12. DA, DC, DD, VSP transpose रात्रौ and तत्पूर्वं. 13. DA -मूलकत्वे लाघवात्, DB -मूलतानुरोधात् for -मूलत्वे लाघवात्. 15. DA omits तु.

इति शातातपवचनेऽहोरात्रं सूर्यग्रहेऽह्न्यभोजनं चन्द्रग्रहे रात्र्यभोजनं विदधाति, तदपि ग्रहणात्पूर्वम्,

मुक्तिं दृष्ट्वा

इत्यभिधानादिति समयप्रकाशः। तच्चिन्त्यम्।

नाद्यात्सूर्यग्रहात्पूर्वम्

इत्यादिवचनैर्ग्रहणपूर्वभोजनस्य निषिद्धत्वात्तदतिक्रमे च

चन्द्रसूर्यग्रहे भुक्त्वा प्राजापत्येन शुध्यति।
तस्मिन्नेव दिने भुक्त्वा त्रिरात्राच्छुद्धिरिष्यते ॥

इति भवदेवलिखितदेवलवचनात्प्रत्यवायावगतेर्न काम्यत्वम्। अहोरात्राभोजनस्य काम्यत्वम्,

अहोरात्रं तु नाश्नीयात्

इत्यनन्तरमेव

सूर्याचन्द्रमसोर्लोकानक्षयान् याति मानवः।
धौतपाप्मा विशुद्धात्मा मोदते दिवि देववत् ॥

1. DB -वचनात्, SP -वचनं for -वचने. SP inserts यत् after -वचने. DA inserts तु after अहोरात्रं. VSP सूर्यग्रहणे for सूर्यग्रहे. DA चन्द्रसूर्यग्रहे, VSP चन्द्रग्रहणे for चन्द्रग्रहे. 3. After दृष्ट्वा DB adds तु भुञ्जीत. 4. DA -प्रकाशकारः, SP -प्रकाशकृतः for -प्रकाशः. [5. Cf. Laghu-vyāsa-saṃhitā 2.80a.] 6. DC, DD इत्यादिवचने ग्रहणात्पूर्वभोजनस्य. AS omits च. 8. Before तस्मिन्नेव DA inserts: तस्मिन्ने(व) दिने भुक्त्वा प्राजापत्येन शुध्यति. 9. VSP इत्यादि for इति. DA, DC, DD, AS, VSP insert च after -वचनात्. DC प्रत्यवायगते-. 9-10. VSP omits अहोरात्राभोजनस्य काम्यत्वम्. 9. DA, AS, SP insert च after -भोजनस्य. 10. DC, DD insert तु after काम्यत्वम्. 11. After नाश्नीयात् DA adds: चन्द्रसूर्यग्रहे यदा. 14. DB -पापा for -पाप्मा. DA देवि for दिवि.

इति शातातपेन फलकीर्तनात्। तस्मादहोरात्राभोजनविधानं काम्यं ग्रहणदिनपूर्वदिने ज्ञेयम्।

अयने विषुवे चैव चन्द्रसूर्यग्रहे तथा।
अहोरात्रोषितः स्नातः सर्वपापैः प्रमुच्यते ॥

तथा

नित्यं द्वयोरयनयोर्नित्यं विषुवयोर्द्वयोः।
चन्द्रार्कयोर्ग्रहणयोर्व्यतीपाते च वैधृतौ ॥
अहोरात्रोषितः स्नानं श्राद्धं दानं च शक्तितः।
यः करोति प्रसन्नात्मा तस्य स्यादक्षयं च तत् ॥

इत्यादावतीतार्थ-क्त-प्रत्ययबलात्तत्कामनाविरहे तु शक्तेन पूर्वं न भोक्तव्यमेव। अत एव ग्रस्तास्तमयपक्षे उपवास एवोक्तः।

यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु

(विष्णुधर्मोत्तर २.६३.२) इत्यनेनोदयावध्यभोजने सिद्धेऽपि

मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा परेऽहनि

1. DA, VSP शातातपवचने फल- . VSP ग्रहणपूर्वदिने. 1-2. DC, DD -दिने विज्ञेयम्. 3. DB विषुपे चव. 4. SP inserts इति after प्रमुच्यते 6. DB विषुपयोः, SP, VSP विषुवतोः for विषुवयोः . 7. VSP -पातेषु for -पाते च. 9. DA प्रपन्नात्मा. 10. DA -वतीतार्थयुक्तप्रत्यय-, DB, VSP -वतीतार्थे क्त-प्रत्यय-, AS -वतीतार्थक-क्त-प्रत्यय- . VSP (after marginal correction) अपि for तु DA तन्नो for न DA omits एव after भोक्तव्यम्. 11. DA, DB, AS, SP, VSP ग्रस्तास्तपक्षे. 13. DC -भोजनसिद्धे- . 14. DA अपि for तु.

इति, तथा

अमुक्तयोरस्तं गतयोर्दृष्ट्वा स्नात्वा परेऽहनि

इति, तथा

दृष्ट्वा स्नात्वा परेऽह्न्यद्याद् ग्रस्तास्तमितयोस्तयोः

इत्यादौ ग्रस्तास्तमयपक्षे तद्दिनेऽभोजनमेव प्रतीयते।

परेऽहनि

इत्यादीनां पूर्वदिनभोजनव्यावर्तकतयैव सार्थकत्वात्। अशक्तेन बालादिना च सूर्यग्रहे दिवा न भोक्तव्यम्; चन्द्रग्रहेऽर्धरात्रात्परतो वृत्ते रात्रौ न भोक्तव्यम्, किंतु दिवैव; अर्धरात्रादर्वाग्ग्रहणे तु तैरपि दिवा न भोक्तव्यम्।

नाद्यात्सूर्यग्रहात्पूर्वम्

इत्यादिपूर्वलिखितवचनात्, तथा

अर्धरात्रे व्यतीते तु यदा चन्द्रग्रहो भवेत्।
सायं तत्र न भुञ्जीत न तु प्रातरभोजनम्॥

इति बृहन्नारदीयपुराणवचनाच्च। ब्रह्मवैवर्ते

[2. Cf. Laghu-vyāsa-saṃhitā 2.81a.] 5. DA inserts इत्ययोः (?) before इत्यादौ. DC, DD, SP insert परेऽहनीति ग्रहणात् after ग्रस्तास्तमयपक्षे. DB, DC omit एव. AS inserts चेति after प्रतीयते 7. DB पूर्वदिने भोजकव्यावतक-. DA इव for एव. DA साथेकत्वमिति for सार्थकत्वात्. 9. SP, VSP insert अपि after दिवा. 10. SP -ग्रहे for -ग्रहात्. [10. Cf. Laghu-vyāsa-saṃhitā, 2.80a.] [12-13. The verse अर्धरात्रे व्यतीते तु is not found in the Bṛhannāradīya-p.] 12. AS यदि for यदा. 12f. DD haplologically (?) omits all words from चन्द्रग्रहो to यामचतुष्टयम् (on p. 74, line 4). 13. DA omits न before भुञ्जीत. DB, AS, VSP भोक्तव्यं for भुञ्जीत. 14. DA इति वृद्धनारदीय-. DB -वचनाच्च, DC -पुराणाच्च for -पुराणवचनाच्च.

संध्याकाले यदा राहुर्ग्रसते शशिभास्करौ ।
तदा दिवा न भोक्तव्यमातुरस्त्रीशिशून् विना ॥

इति । तथा वृद्धगोतमः

सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् ।
चन्द्रग्रहे तु यामांस्त्रीन् बालवृद्धातुरैर्विना ॥

इति । यामचतुष्टयमिति दिवोपलक्षणम् । एतदत्यन्तसमर्थबालादिविषयम् । अशक्तमात्रबालादिना तु दिवा न भोक्तव्यमेव रविग्रहे, चन्द्रग्रहेऽर्धरात्रात्परपातिनि रात्रौ न भोक्तव्यम् । अत्यन्तासमर्थेन तु रविग्रहे दिवापि, चन्द्रग्रहे यामत्रयाभ्यन्तरेऽपि भोक्तव्यम् । शक्तेन तु पूर्वं न भोक्तव्यमेव, प्रायश्चित्तश्रुतेः, किंतु मुक्तेरनन्तरमेव ।

अद्यात्स्नात्वा विमुक्तयोः ।

मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ॥

( कूर्मपुराण २.१९.१५-१६ ) इत्यादिस्मृतेः । अत्र च ग्रस्तास्तमयकाले ग्रहणदर्शनवदृष्ट्वेत्याद्यश्रवणान्मेघादिना युक्तयोरदर्शनेऽपि भोजनमविरुद्धमेव । न चैकत्र

2. For भोक्तव्यमातुर- etc. SP has भोक्तव्यं मातुर with a blank space after मातुर . DB -शिशुं for -शिशून् . 3. DC, SP omit इति . DC inserts च after तथा. AS -गौतमः, SP -शातातपः for -गोतमः . 4. DA, VSP अपि for तु. AS पूर्वयाम- . 5. DA omits तु. 6. SP inserts च after एतत् . 7. AS omits तु. SP inserts इति after भोक्तव्यमेव. SP -र्धरात्रौ पर- . 7-8. VSP omits all words from अर्धरात्रात्परपातिनि to अत्यन्तासमर्थेन. 8. DC, DD omit अपि after दिवा. AS यामद्वयाभ्यन्तरे- . AS omits अपि after यामत्रयाभ्यन्तरे. 9. VSP तत्पूर्वं for पूर्वं. 12-13. DA ग्रस्तास्तमयकाम्यग्रहणदर्शनवत्, DB ग्रस्तास्तसमयकालस्य दर्शनवत्, DC, AS ग्रस्तास्तमयकालस्य ग्रहणदर्शनवत्, DD ग्रस्तास्तमयकालस्य ग्रहणवत्, SP ग्रस्तास्तमयकालग्रहणदर्शनवत् for ग्रस्तास्तमयकाले ग्रहणदर्शनवत्. 13. DA दृष्टेत्याद्य-, VSP दृष्टेत्यादि- for दृष्ट्वेत्याद्य- . VSP मेघमालादिना for मेघादिना. DC inserts दर्शनवत् after मेघादिना.

निर्णीतः शास्त्रार्थो बाधकं विनान्यत्रापि प्रवर्तते इति न्यायादत्रापि दर्शनं विवक्षितमिति वाच्यम्। तस्य न्यायसिद्धशास्त्रविषयत्वेन वाचनिकेऽर्थेऽप्रवृत्तेः। अतएव

यावद्वचनं हि वाचनिकम्

इत्याप्तानां समय इति। तथा च पठन्ति

मेघमालादिदोषेण यदा चन्द्रो न दृश्यते।
आकलय्य तु तं कालं भुञ्जीत स्नानपूर्वकम्॥

इति। महानिशा देवलोक्ता

महानिशा च विज्ञेया मध्यमं प्रहरद्वयम्

इति। एतदपि प्रहरद्वयं सार्धप्रथमप्रहरोपरि।

मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनां नित्यम्।
अहनि च तथा तमस्विन्यां सार्धप्रथमयामान्तः॥

(कात्यायनस्मृति १३.६) इति छन्दोगपरिशिष्टवचनात्। ग्रस्तास्तमितयोस्तु तद्दिने उपवास एव, परदिने सूर्याचन्द्रमसौ दृष्ट्वा स्नात्वा भोजनम्।

दृष्ट्वा स्नात्वा परेऽहनि

1. DB, DC, SP, VSP अन्तरेण for विना. 2. DB वाचनिकार्थं प्रवृत्तेः. 4. SP omits च. 5. AS यदि for यदा. 6. AS तु तत्कालं. 7. DB omits इति. DC, DD, AS, SP, VSP insert च after महानिशा. DB, DC, DD, SP देवलेनोक्ता. 8. DC, DD, SP, VSP तु for च. 9. DB, SP, VSP omit इति. SP इदमपि for एतदपि. 10. DA, AS उक्तं for प्रोक्तं. 11. DB omits तथा. DP, DC, DD, AS, SP -प्रहर- for -प्रथम-. [ Though from the evidence of Mss DA and VSP and from the use of the word सार्धप्रथमप्रहरोपरि in line 9 Śrīnātha seems to have accepted the reading सार्धप्रथमयामान्तः, the reading सार्धप्रहरयामान्तः is the widely used one, for which see Vk, pp. 65 and 104 and St I, pp. 30, 53 and 539 and II, pp. 3, 56 and 151. ] 12. DB omits तु. AS तयोः, SP च for तु. DA परदिने for तद्दिने. 13. DB, DC, DD, AS insert तु after परदिने. SP भोक्तव्यं for भोजनम्. [ 14. Cf. Laghu-vyāsa-saṃhitā 2.81a. ]

इत्यादिश्रुतेः। अतो मेघादिनादर्शने तत्राप्यभोजनमित्युक्तम्। एतदप्यहोरात्राभोजनं काम्यमेव, अत उक्तकामनाविरहे तत्रापि भोजनमनिषिद्धमेवेति कश्चित्। तन्न। फलाश्रवणात्। न चैकमूलत्वे लाघवात्फलकल्पनमिति वाच्यम्। काम्यस्य पूर्वदिनोपवासस्य ग्रहणदिने मुक्तिदर्शनानन्तरं भोजनविधानात् ग्रहणपरदिनाभोजनविधायकेन तद्दिनोपवासेनैकमूलतानुपपत्त्या भिन्नश्रुतिमूलस्यावश्यकत्वात्, प्रमाणवतो गौरवस्यापि न्याय्यत्वात्। काम्यश्चोपवासो गृहिणा पुत्रिणा फलकामेनापि न कार्यः।

गृही त्रयोदशीश्राद्धं नैव कुर्वीत पुत्रवान्।
उपवासं च संक्रान्तौ चन्द्रसूर्यग्रहे तथा ॥

इति षट्त्रिंशन्मतवचनात्। अत्र च भोजनविधिनिषेधौ दृष्टोपरागविषयावेव, न तु पुंमात्रविषयौ। मानाभावात्,

1. DB, DC, DD, AS इति for इत्यादि-. VSP -स्मृतेः for -श्रुतेः. DA inserts अपि after -दर्शने. DB, DC, DD, AS, SP न भोजनम् for अभोजनम्. VSP एवं च for एतदपि. 2. AS अत्र for अतः. DB, DC, DD उक्तं कामना-, VSP उक्तकामनादि- for उक्तकामना-. 2-3. DD haplologically omits all words from -विरहे to न चैक-. 2. DB, DC -विरुद्ध- for -निषिद्ध-. DA omits एव after -निषिद्धम्. 3. DC, DD -मूलत्वेन लाघवा-. DB अपि for इति. SP तस्य for काम्यस्य. 4-5. DA ग्रहणपरदिने भोजनकाले न, DB ग्रहणपरदिनभोजनकेन. DC (before correction), DD 'ग्रहणपरदिनभोजन। कन' (?), but DC (after correction) ग्रहणदिनभोजनकेन, AS ग्रहणपरदिनभोजनं केवल, VSP ग्रहणपरदिने भोजनैकेन for ग्रहणपरदिनाभोजनविधायकेन. 5. AS -मूलकतानुपपत्त्या, VSP -मूलकताया अनुपपत्त्या. DD, SP, VSP -श्रुतिमूलत्वस्याव-. 6. DB पुत्रिणा तु फलकामेनापि न कार्यम्, DC, DD काम्यश्चोपवासो ग्रहणदिनपूर्वदिनोपवासः पुत्रिणा फलकामेनापि न कार्यः, AS पुत्रिणा तु फलकामनयापि कार्यः, SP पुत्रिणां तु फलकामेऽपि नोपवासः, VSP पुत्रिणा तु फलकामेनापि न कार्यः for the words from काम्यश्चोपवासः to कार्यः. 8. AS संक्रान्त्यां चन्द्र-. 9. DA षट्त्रिंशद्वचनात्, AS षट्त्रिंशन्मतवचनदर्शनात्, SP षट्त्रिंशन्मतस्मरणात् for षट्त्रिंशन्मतवचनात्. DA, VSP omit च. DB चाभोजन-. 9-10. DC, DD उपरागदर्शनसमानाधिकरणविषयावेव न तु तन्मात्रविषयौ for the words from दृष्टोपराग- to पुंमात्रविषयौ.

मुक्तिं दृष्ट्वा

इत्यादिना तस्यैव प्रकृतत्वाच्चेति। मुक्तौ च परान्नभोजनं न कार्यम्।

मुक्तयोस्तु कृतस्नानः पश्चात्कुर्यात्स्ववेश्मनि

इति शातातपवचनात्। ग्रहणे च शावाशौचतुल्यमशौचम्, विमुक्तौ जननाशौचतुल्यम। तदुक्तं

ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम्।
तयोः संपत्तिमात्रेण उपस्पृश्य क्रियाक्रमः॥

इति। तथा मनुरपि

त्र्यहं न कीर्तयेद्ब्रह्म राज्ञो राहोश्च सूतके

(मनुस्मृति ४.११०) इति। अतो ग्रहणदर्शनानन्तरं स्नात्वापि शृतस्यान्नस्य स्पृष्टस्य च पाकस्य मुक्तावशौचान्ते त्याग इति।

ग्रहणदर्शनं च जननमरणशौचिनापि कर्तव्यम्। स्नानश्राद्धादिकं चेति निबन्धारः।

2. VSP omits च (after मुक्तौ). DB पराह्नभोजनं. SP निषिद्धं for न कार्यम्. 3. SP पाकं for पश्चात्. DA कृत्वा for कुर्यात्. 4. VSP omits च (after ग्रहणे). 4-5. DA omits all words from अशौचम् to -तुल्यम्. 4. DC, DD, AS मुक्तौ, VSP मुक्तौ तु for विमुक्तौ. AS, SP insert च after विमुक्तौ. 6. DC, DD मुक्तौ तु for विमुक्तौ. AS सूतकं for सौतिकं. AS adds इति after स्मृतम्. 8. DB omits इति. 10. DB ग्रहणानन्तरं. DB omits अपि. SP omits च (after स्पृष्टस्य). 10-11. AS transposes च and पाकस्य. 11. VSP omits पाकस्य. SP अशौचात् for अशौचान्ते. DB inserts च after अशौचान्ते. DA त्यागमर्हति, SP अन्नत्याग इति for त्याग इति. VSP omits इति 12. DB स्नानं श्राद्धादिकं. 13. SP निबन्धकारः.

सूतके मृतके चैव सूतकं राहुदर्शने ।
तावत्स्यादशुचिर्विप्रो यावन्मुक्तिर्न दृश्यते ।।
सर्वेषामेव वर्णानां सूतकं राहुदर्शने ।
स्नात्वा कर्माणि कुर्वीत श्रृतमन्नं विवर्जयेत् ॥

इत्यादिस्मृतेः। अत्र सूतकमृतकपदं प्रयत्नानपनेयाशौचपरम्, अतः क्षतादिजन्याशौचस्याप्यपवाद इति मैथिलाः। अन्ये तु सूतकमृतकपदवाच्यजननमरणाशौचयोरेव स्नानादिकम्। वस्तुतस्तु स्नानमात्रेऽधिकारो न दानश्राद्धादौ।

सूतके मृतके चैव ग्रहणे चन्द्रसूर्ययोः ।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ।।

तथा

सूतके मृतके चैव सूतकं राहुदर्शने ।
स्नानमात्रं प्रकुर्वीत दानश्राद्धं विवर्जयेत् ।।

इति महाजनपरिगृहीतवचनैकमूलतयोक्तवचनस्य स्नानमात्रपरताया एव युक्तत्वात्। अत एव

सूतके मृतके चैव न दोषो राहुदर्शने ।
स्नानमात्रं प्रकुर्वीत दानश्राद्धविवर्जितम् ।।

1. For सूतकं DA reads मृतकं and in the margin records the alternative reading न दोषो with the words 'न दोषो राहुदर्शने इति वा'. [This alternative reading of DA is found in Kv, p. 528 ] 2. DA inserts इति after दृश्यते. 5. DB इति for इत्यादि-. SP अत एव for अत्र. DB सूतकपदं. 5-6. For the words from प्रयत्नानपनेया- to मैथिलाः, DA reads प्रयत्नानपनेयाऽशौचस्यानपवाद इति मैथिलाः. AS -जन्यस्याशौच-. 6. VSP -शौचस्यापवाद-. AS अत्र बाधः for अपवादः. DA, DC, DD, VSP omit -मृतक-. 7. AS स्नानमात्रेषु for स्नानमात्रे. 9. DA विमुञ्चति for न विन्दति. 13. DB -जनगृहीतवचनैकवाक्यमूल-. DB -परतया एव. SP omits एव. 16. DA तदा न श्राद्धवर्जितम्, DB दानश्राद्धं विवर्जितम्, DC, DD दानश्राद्धं विवर्जयेत्, AS श्राद्धदानविवर्जितम् for दानश्राद्धविवर्जितम्.

इति यदुक्तं स्मृताविति गङ्गावाक्यावल्यां (पृः १७८) लिखितमिति। एवं

नित्यस्य कर्मणो हानिः केवलं मृत्युजन्मनोः।
न तु नैमित्तिकोच्छेदः कर्तव्यो हि कथंचन॥

इति सामान्यतो नैमित्तिकप्रतिप्रसवस्यापि नैमित्तिकविशेषपरत्वम्,

आग्नेयं चतुर्धा करोति पुरोडाशं चतुर्धा करोति

इतिवदिति। अत्र च मुक्तेः पूर्वं पाकस्पर्शाद्यनधिकारप्रतीतेर्ग्रस्तास्तमयपक्षे मुक्तिं गणितसिद्धां निश्चित्य स्नात्वा पाकस्पर्शस्नानश्राद्धादिदैवपित्र्येऽधिकारोऽप्रत्यूह एव।

यदैवास्तं गतश्चन्द्रो राहोराननगोचरः।
आकलय्य तु तं कालं क्रिया कार्या विचक्षणैः॥

इति ब्रह्मपुराणवचनात्।

दृष्ट्वा स्नात्वा परेऽहनि

इत्यादिश्रवणाद्भोजनमात्र एव दर्शनापेक्षेति।

1. DB inserts स्मृते before इति यदुक्तं. DB -वाक्यावल्या लिखित-, SP -वाक्यावलीलिखित-. AS omits इति (after लिखितम्). 2. DA inserts इति after -जन्मनोः. 4. DA inserts एव after -परत्वम् 5. SP inserts यथा before आग्नेयं DA आस्थेयं (?) for आग्नेयं. DD inserts च after आग्नेयं as well as after पुरोडाशं. 6. DB इत्यादिवदिति. DA omits च. SP -स्पर्शाद्यधिकार-. DB ग्रस्तास्तसमयपक्षे. 7. DB, AS -दान- for -स्नान-. DA, AS -दैवे पित्र्ये, DB -दैवे पैत्रे, DC, DD दैवपित्रे for -दैवपित्र्ये. AS निष्प्रत्यूह- for अप्रत्यूह-. 8. DB यदि वास्तं गत-, AS यदि वास्तमित-. 9. AS तु तत्कालं 10. DD, DD -पुराणोक्तवचनात्. 11. AS, VSP परेऽह्नयद्यात् for परेऽहनि [11. Cf. Laghu-vyāsa-saṃhitā 2. 81a.] 12. VSP इति for इत्यादि-. DB इत्यादिवचनाद्भोजन एव, DC, DD अथादिति श्रवणाद्भोजनमात्रमेव. DA दर्शनापेक्ष इति.

ग्रहणे च श्राद्धमामान्नेनैव कर्तव्यम्,

आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा ।
आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि ॥

इति प्रचेतोवचनात् । श्राद्धे चात्र पुरोरवोमाद्रवसोरेव देवतात्वम्, न तु कालकामयोः ।

नैमित्तिके कालकामौ

इत्यत्र नैमित्तिकपदस्य सान्निवहृचकर्तृकनवश्राद्धाद्येकोद्दिष्टपरत्वव्यवस्थापनादिति । तार्क्ष्यपुराणे

सूर्यग्रहः सूयवारे सोमे सोमग्रहस्तथा ।
चूडामणिरिति ख्यातस्तदा योगः प्रकीर्तितः ॥
अन्यदा तु यदा भानोरिन्दोर्वा ग्रहणं भवेत् ।
तत्फलं कोटिगुणितं योगेऽत्र ग्रहदर्शने ॥

इति । व्यासः

सर्वं भूमिसमं दानं सर्वे व्याससमा द्विजाः ।
सर्वं गङ्गासमं तोयं ग्रहणे चन्द्रसूर्ययोः ॥
इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं च तत् ।
गङ्गातोये तु संप्राप्ते इन्दोः कोटी रवेर्दश ॥

(पद्मपुराण, सृष्टिखण्ड, ४७,२३७-२३६)

1. DB omits च. VSP omits एव. DC, AS, SP, VSP कार्यम् for कर्तव्यम्. 4. VSP पुरूरवो-. SP विश्वेदेवत्वम् for एव देवतात्वम्. 7. VSP कालकाम- for नैमित्तिक-. DB -परत्वस्य for -परत्व-. 8. DD, SP तार्क्ष्यपुराणे. [9-12. These lines are not found in the Garuḍa-p. ] 9. VSP -ग्रहे सूर्य-. DC, VSP -ग्रहे तथा. 10. SP चूडामणिरयं योगः सूर्यग्रहशतैः समः for the whole line. 11. VSP भानाविन्दौ वा. 12. DB तत्कालं कोटि-. DC, DD योगोऽत्र. SP राहुदर्शने for ग्रहदर्शने. 16. DB तु for च. 17. AS, VSP गङ्गातीरे तु.

दश कोटय इत्यर्थः। सामान्यस्नाने यत्फलं तद्ग्रहणकाले तीर्थान्तरे लक्षगुणम्, रवेर्दशलक्षगुणम्, गङ्गास्नाने त्विन्दुग्रहे तदेव कोटिगुणम्, सूर्यग्रहे तु दशकोटिगुणमिति। ग्रहणकाले चासमुद्रगायामपि नद्यां स्नाने रजोदोषो नास्ति,

चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते

(कात्यायनस्मृति १०.७) इति छन्दोगपरिशिष्टवचनात्। ग्रहणनिमित्तकस्नानश्राद्धादिकं तु रात्रावपि कार्यम्।

राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु।
स्नानदानादिकं कुर्युर्निशि काम्यव्रतेषु च॥

स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्॥

इत्यादिस्मृतेरिति॥

1. VSP inserts रवेः before दश DA दशकोटीत्यर्थः. DC, DD, AS,SP -स्नानेन यत्फलं. 2. DA, DB omit रवेर्दशलक्षगुणम्. DA omits तु (after गङ्गास्नाने). SP inserts संप्राप्ते after तु DC, DD त्विन्दुग्रहणे तदेव. DB omits तदेव DC, DD सूर्यग्रहणे तु. DB, AS omit तु (before दशकोटि-). 3. DA VSP इत्यर्थः for इति. DB, DC, DD, AS, VSP ग्रहणस्नाने चासमुद्र-. DB अपि, AS तु for च SP -गामिन्यामपि for -गायामपि. DB places अपि after नद्यां, whereas SP omits it. DB omits स्नाने. 5. SP omits छन्दोगपरिशिष्ट-. 5-6. DA ग्रहणनिमित्तकस्नानदानश्राद्धादिकं, DB ग्रहणनिमित्तकश्राद्धं, SP ग्रहणनिमित्तस्नानश्राद्धादिकं. 6. DC, DD कर्तव्यम् for कार्यम्. 7. DA inserts तथा before राहुदर्शनसंक्रान्ति-. 8. AS drops च. 9. DB, AS, SP, VSP insert तथा before स्नानं दानं तपः etc. DC, DD, AS, SP जपः for तपः. 11. SP omits इति (after -स्मृतेः).

# अथ सामान्यतिथिषु कर्माङ्गत्वनिर्णयः ॥

तत्र प्रतिपदादितिथिविशेषविहितानां दैवपित्र्यकर्मणामखण्डतिथौ निःसंशयमेवानुष्ठानम्। यदा तु दिनद्वयेऽपि विहितकाले तत्तत्तिथिः कर्मयोग्या लभ्यते तदा कुत्र कर्मानुष्ठानमिति संशये परस्परविरुद्धप्रायानेकमुनिवचनदर्शनात्कथं निर्णयः ? यथा बौधायनः

अभ्युद्यन्नेव सविता यां तिथिं प्रतिपद्यते।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्मसु ॥

तथा गृह्यपरिशिष्टं

सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥
ययास्तं सविता याति पितरस्तामुपासते।
तिथिं तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयंभुवा ॥

तथा देवलः

यां तिथिं समनुप्राप्य उदयं याति भास्करः।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ॥
यां तिथिं समनुप्राप्य अस्तं याति च भास्करः।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ॥

1. VSP inserts रवेः after अथ. VSP -निश्चयः for -निर्णयः. 2. DB, DD omit -विशेष-. DB -पैत्र्य- for -पित्र्य-. 3. VSP omits एव. DC, DD place तु after विहितकाले and not after यदा. AS विहिततिथिः for विहितकाले तत्तत्तिथिः. DA, SP तत्तिथिः for तत्तत्तिथिः. SP omits लभ्यते. 4. VSP repeats कुत्र. DB omits संशये 5. DB, VSP तथा for यथा. DD omits यथा बौधायनः. 9. DC, DD -भ्युदयो रवेः. [9-10. Cf. Viṣṇudharmottara I.60.25.] 13. AS यथा for तथा. 16. DB दिवाकरः for च भास्करः.

तथा विष्णुधर्मोत्तरे ( १.६०.२४-२६ )

नक्षत्रं देवदेवेश तिथिं चार्धविनिर्गताम् ।
दृष्ट्वोपवासः कर्तव्यः कथं शंकर जानता ॥

ईश्वर उवाच ।

सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥
सा तिथिस्तदहोरात्रं यस्यामस्तमितो रविः ।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम् ॥
शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः ॥

इति । अत्र कश्चिद्दैवे कर्मणि तिथिसंशये उदयगामिनी पित्र्ये कर्मण्यस्तगामिनीति व्यवस्थामाह,

दैवे कर्मणि संप्राप्ते यस्यामभ्युदितो रविः ।
सा तिथिः सकला ज्ञेया पित्र्यर्थे चापराह्णिकी ॥

इति मार्कण्डेयपुराणवचनात् । तन्न । पूर्वोपदर्शितवचनेषु दैवे कर्मण्यस्तगामिन्या अपि तिथेः पूज्यत्वाभिधानात् । तथा युग्मवचनविरोधश्च । यथा गृह्यपरिशिष्टं

युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा ॥

3. DB, SP शंकर-, VSP श्रीशंकर- for ईश्वर-. 7-8. AS, VSP omit these two lines haplologically. [These two lines (7-8) as well as line 10 are not found in the Viṣṇudharmottara.] 8-10. DB omits these three lines. 11. AS, SP omit इति. SP -ह्वैवकर्मणि. DA omits तिथि-. DC DD पैत्र्ये, VSP पित्र्य- for पित्र्ये. DA inserts यदि and AS संशये after कर्मणि. 13. DC, DD दैवकर्मणि. 15. SP नारदीय- for मार्कण्डेय-. DB, DC, DD, AS, VSP -वचनैः, SP -वचने for -वचनेषु SP दैवकर्मण्य-. DB, DC, DD, SP, VSP insert एव after कर्मणि. 16. VSP omits तिथेः. DB -विरोधात् for -विरोधः. DD, AS, SP omit च. DA omits गृह्य-.

प्रतिपदाप्यमावास्या तिथ्योर्युग्मं महाफलम्।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम्॥
षष्ठ्यष्टम्यप्यमावास्या कृष्णपक्षे त्रयोदशी।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः॥

इति। युग्मं द्वितीया, अग्निस्तृतीया, कृतं चतुर्थी, भूतं पञ्चमी, षट् षष्ठी, मुनिः सप्तमी, वसुरष्टमी, रन्ध्रं नवमी, रुद्र एकादशी। अत्र

युग्माग्नि

इत्यादौ विभक्तिव्यत्ययं कृत्वा यथासंभवमन्वयः कार्यः। तथा च द्वितीयादीनामुदयसंबन्धेन तृतीयादीनामस्तसंबन्धेन पूज्यतेत्यर्थः पर्यवसितो भवति। अत्रापि युग्मपरतिथिषु सप्तम्यादिषूपवासकर्मणि परदिने व्यस्तेऽपि यद्युदयास्तव्याप्तिस्तदा तत्रैव निःसंशयमुपवासः,

त्रिसंध्यव्यापिनी या तु सैव पूज्या सदा तिथिः।
न तत्र युग्मादरणमन्यत्र हरिवासरात्॥

इति लक्ष्मीधरलिखितपराशरवचनात्। पूर्वयुग्मतिथिषु द्वितीयादिषु परदिनसंबन्धमात्र एव संशयो निर्णायकविशेषप्रमाणाभावादिति भावः।

3. DB inserts तथा before षष्ठ्यष्टम्यप्यमा-. DC, DD drop अपि. AS -पक्षत्रयोदशी 4. DB कार्याः for पूज्याः. VSP मिश्रिताः for संयुताः. 5. DC, DD, VSP omit इति. 6. AS, VSP वस्वष्टमी. DA inserts तु after अत्र. 8. DB omits च (after तथा). 9. DB, AS -मस्तमयसंबन्धेन. DA पूज्यत इत्यर्थः. DA, VSP तत्र for अत्र. DB यदि, AS च for अपि. 10. SP उभयदिने for उपवासकर्मणि परदिने. DC, DD -व्यापिनी for -व्याप्तिः. 12. DB, AS त्रिसंध्याव्यापिनी. 14. DA लक्ष्मविधिलिखितवचनात् (?), VSP लक्ष्मीधरादिलिखितपराशर-वचनात्. DB पूर्वतिथियुत- for पूर्वयुग्मतिथिषु DC, DD, VSP insert तु after -तिथिषु. SP omits द्वितीयादिषु; AS has this word in the margin but encloses it within brackets. 14-15. DA -संबन्धमात्र एव संशये निर्णायक-, DB -संबन्ध एव संशयनिर्णायक-, DC, DD संबन्धमात्रमेव संशये निर्णायक, SP -संबन्धमात्रसंशयो निर्णायक-. 15. VSP निर्णायकः विशेष-.

अन्यत्र हरिवासरात्

इति तत्र द्वादश्या उदयास्तव्यापित्वेऽप्युपवासे युग्मादर एवेत्यर्थः।

एतद्व्यस्तम्

इति विपरीतयुग्मं द्वितीयाप्रतिपदोस्तृतीयाचतुर्थ्योरित्यादि। व्यस्तयुग्ममित्यर्थः। एतच्च युग्मापेक्षया। यदि तु विहितयुग्मे विहितकाललाभो नास्ति तत्र व्यस्तयुग्मस्यापि ग्रहणम्। एवं युग्मप्रशंसापि व्यस्तयुग्मापेक्षया, न तु षष्टिदण्डात्मिकापेक्षयापि। संशये युग्मादिवचनप्रवृत्तेः, प्रकृते संशयाभावात्,

तिथ्योर्युग्मं महाफलम्,
एतद्व्यस्तं महाघोरम्

इत्यनयोः स्वातन्त्र्ये वाक्यभेदापत्तेश्च। तस्माद्युग्मविधेरर्थप्राप्तं व्यस्ततिथिनिषेधमनूद्य व्यस्ततिथिनिन्दा तदपेक्षया युग्मतिथिप्रशंसार्था, एकवाक्यत्वे लाघवादिति। अत्र ब्रूमः—

नक्षत्रं देवदेवेश (विष्णुधर्मोत्तर १.६०.२४)

.. . ... . ... . . . . .. ..

2. SP omits अपि. DC, DD इति for इत्यर्थः. 4. SP -चतुर्थ्योरित्यादिकमित्यर्थः for '-चतुर्थ्योरित्यादि। व्यस्तयुग्ममित्यर्थः।' 5. DA हरियुग्मापेक्षया, SP (after correction) युग्मविहितकालापेक्षया for युग्मापेक्षया. DC -युग्मविहित- for -युग्मे विहित-. DA -कालको for -काललाभो. 6. DC, DD ग्रहणमेव for 'ग्रहणम्। एवं'. 7. SP षष्टिदण्डापेक्षया. DB, SP, VSP omit अपि. DB युग्मवचन-. DA inserts अपि and DB, DC, DD च after प्रकृते. 9. DA तत्र व्यस्तं for एतद्व्यस्तं 6. DC, DD स्वातन्त्र्यं, VSP स्वातन्त्र्येण for स्वातन्त्र्ये. DB, SP omit च AS, SP (after correction) अनुप्राप्तं for अर्थप्राप्तं. DD -तिथेर्निषेधम्, SP -तिथिम् for तिथिनिषेधम्. 11. DB, VSP व्यस्तनिन्दा तदपेक्षया, DC, DD व्यस्तनिन्दा तदपेक्षा, AS व्यस्तनिन्दापेक्षया for व्यस्ततिथिनिन्दा तदपेक्षया. DB -प्रशंसार्थ- for -प्रशंसार्था. 13. DC adds तिथिं च and VSP तिथिं चार्धविनिर्गताम् after देवदेवेश.

इत्यादावर्थविनिर्गताया विहितकालव्यापिन्यास्तिथेरुभयदिनलाभे कथमिति प्रश्ने नोभयदिनस्य कर्माङ्गत्वं किंत्वेकस्यैवेति सूचितम्। ततश्च

मध्याह्नव्यापिनी या तु

इत्यनेन, तथा

कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथिः।
तया कर्माणि कुर्वीत ह्रासवृद्धी न कारणम्॥

इति मदनपारिजातलिखितवृद्धयाज्ञवल्क्यवचनेनानन्यगतिकतया प्रशस्तकालसंबन्धेन दिनविशेषस्य नियमोऽवगम्यते। एवं

ययास्तं सविता याति

इत्यत्राप्येकदिनस्याङ्गत्वे प्रशस्तकालस्यापराह्णस्य संबन्ध एव हेतुतयोक्तः। अत एव प्रशस्तकालसंबन्धस्योभयदिने संभवात्संशये युग्मादिवचनम्। एकदिनसंबन्धे तेनैव संशयनिरासान्न युग्मादिवचनविषयता। किं च, यत्रोभयत्र प्रशस्तकालप्राप्तावेव न दिनद्वयस्य कर्माङ्गता तदैकत्र प्रशस्तकालप्राप्तावन्यत्र सामान्यकालप्राप्तावपि

1. DC omits इत्यादौ. AS प्रश्नेन. 2. AS, SP transpose न and उभयदिनस्य. DC (after correction) एकदिनस्य for एकस्य. AS omits एव DA omits इति (after एव). 4-7. DA omits all words from तथा to -वृद्धयाज्ञवल्क्यवचनेन. 4. SP omits तथा. 6. AS omits the entire line तया कर्माणि etc. 7. DC, DD, AS, VSP insert च after -याज्ञवल्क्यवचनेन. 7-8. AS -संबन्धे दिन-. 8. VSP अत एव for एवं. 10. SP कर्माङ्गत्वे for अङ्गत्वे. 10-12. AS haplologically omits all words from प्रशस्तकालस्यापराह्णस्य to यत्रोभयत्र. 10. DB पराह्णस्य, DC, DD अपवादस्य for अपराह्णस्य. DC, DD संबन्धत्वे तु तयोक्तः (?) for संबन्ध एव हेतुतयोक्तः. SP अतः for अत एव. 11. VSP -दिनसंभवात्. SP युग्माग्निवचनम्. SP एकदिने संबन्धे. VSP inserts तु after एकदिनसंबन्धे 12. DB -निरासार्थयुग्मादि-. SP युग्माग्निवचन-. SP यत्रोभय- for यत्रोभयत्र. DB -व्याप्तौ for -प्राप्तौ (before एव). 12-13. SP haplologically (?) omits all words from एव न to प्रशस्तकालप्राप्तौ. 13. DB omits न. DA तदेकत्र.

कथमुभयदिनस्य कर्माङ्गतेति सर्वत्र नियमसिद्धेर्दिनद्वये प्रशस्तकालप्राप्त्यप्राप्तौ च संशये यावद्विधिनिषेधशास्त्रपर्यालोचनया

शुक्लपक्षे तिथिर्ग्राह्या ( विष्णुधर्मोत्तर १.६०.२६ )

इति वचनद्वयेन दैवपित्र्यकर्मसु शुक्लपक्षे उभयत्र कर्मकालव्यापितया संशये उदयगामिनी कृष्णपक्षेऽस्तगामिनी तिथिर्ग्राह्येत्युत्सर्गः। विहितकालश्च देवतापूजा-होमादौ त्रिधाविभक्तदिनप्रथमभागः,

पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणाम्

इति निष्प्रतिपक्षश्रुतेः। एकभक्तव्रते मध्याह्नः,

मध्याह्नव्यापिनी ग्राह्या एकभक्ते सदा तिथिः

इति मदनपारिजातलिखितपुराणवचनात्। अन्येष्वपि कर्मसु शृङ्गग्राहिकया यस्यापराह्णादेर्विधानं स एव बोद्धव्य इति। न च

दृष्ट्वोपवासः कर्तव्यः कथम्

1. AS -कालस्य for -दिनस्य. DA, AS, VSP -सिद्धिः for -सिद्धेः. DB, DC, DD omit अप्राप्तौ. DA omits च; DB अपि for च. 2. DC, DD omit संशये. DC, DD -निषेधधर्मशास्त्र-. 4. AS -द्वयेऽपि दैव-. DC, DD -पैत्र्य- for -पित्र्य-. VSP उभयदिने for उभयत्र. SP omits उभयत्र कर्मकालव्यापितया संशये. 5. VSP inserts तु संशये after कृष्णपक्षे DA तिथिग्राह्येषूत्सर्गः, DC तिथिर्ग्राह्येऽनुत्सर्गः. AS तु for च. 5-6. VSP देवपूजादौ. 6. DB -दिनपूर्वभागः, DC, DD -दिनप्रथमो भागः. 8. DA drops निष्प्रति-. DC, DD -भक्ते व्रते. SP inserts तु after एकभक्तव्रते. DC deletes मध्याह्नः. 10. DC, DD -लिखितादिपुराण-. DA, VSP omit -पुराण-. DB, DC, DD, AS, SP, VSP शृङ्गग्राहिकतया. 11. VSP ग्रहणं for विधानं. AS omits इति. 12. After कथम् AS inserts शंकर जानता.

(विष्णुधर्मोत्तर १.६०.२४) इति प्रश्ने उपवासपदात्तन्मात्रपरत्वे कथं दैवपित्र्यकर्ममात्रपरत्वमुत्तरवचनयोरिति वाच्यम्। उपवासपदस्य मुख्यार्थत्वेऽयुग्मतिथिषूपवासेतरयावत्कर्मसु, तथा युग्मवचनानां दैवकर्ममात्रविषयत्वस्य वक्ष्यमाणत्वेन युग्मतिथिव्याप्यापराह्णिकेतरपितृकर्मसु निर्णयानुपपत्तेः। किं च,

सा तिथिस्तदहोरात्रम्

इत्यस्य गृह्यपरिशिष्टवचनस्य युग्मविषयोपसंहारे वैयर्थ्यापत्तेः शुक्लपक्षादिवचनैकवाक्यतया

तत्र कर्माणि

इति वहुवचनेन यावत्कर्मपरत्वं प्रतीयते, ततश्च

दृष्ट्वोपवासः (विष्णुधर्मोत्तर १.६०.२४)

इत्यत्रोपवासपदं यावत्कर्मोपलक्षकमेवेति। तत्रापराह्णिकपितृकृत्ये

1. DB omits कथं. DC, DD -पैत्र्य- for -पित्र्य-. DB, AS, SP omit -कम-. AS omits -मात्र-. 2. DD उत्तरत्र- for उत्तर-. SP उपवासस्य मुख्या-. DC, DD insert अपि after -तिथिषु. 3. SP दव- for यावत्-. 4. AS निर्णयानुपपत्तिः, SP निर्णयाद्यनुपपत्तेः for निर्णयानुपपत्तेः. [5. Cf. Viṣṇudharmottara I. 60.25.] 6. SP इत्यत्रापि for इत्यस्य AS -संहारवैयर्थ्यापत्तेः. VSP वैयर्थ्यापत्तिः. After वैयर्थ्यापत्तेः VSP inserts : सा तिथिस्तदहोरात्रमिति विष्णुधर्मोत्तरवचने च. 8. Afteı तत्र DC, DD insert : सा तिथिस्तदहोरात्रमित्यादिविष्णुधर्मोत्तरवचनेन च and SP inserts : सा तिथिस्तदहोरात्रमिति विष्णुधर्मोत्तरोक्तवचने. [8. Cf. Viṣṇudharmottara 1.60.25.] 9. DA यावत्कर्ममात्रपरत्वं, VSP यावत्कर्मत्वं for यावत्कर्मपरत्वं DC, DD, SP अतः for ततश्च. For the words from यावत्- to ततश्च AS reads कर्मपदसंकोचापत्तेः. 10. DA adds कर्तव्यः after दृष्ट्वोपवासः. 11. DB inserts अपि after इत्यत्र. For यावत्कर्मोपलक्षकमेवेति AS reads प्रदर्शनार्थं लाक्षणिकमेवेति and SP यावत्कर्मोपलक्षणं प्रदर्शनार्थमिति. SP तथा for तत्र. VSP -पराह्णिके पितृकृत्ये.

यया॒स्तं सविता याति

इति विशेषवचनादस्तसंबन्ध एव कर्तव्यता। युग्मवचनविषयतिथिषु दैवकर्ममात्रे युग्मादिवचनादेव निर्णयः। अतः पारिशेष्याद्युग्मवचनाविषयतिथिष्वापराह्णिक-पितृकृत्येतरयावत्कर्मसु युग्मतिथिषु पितृकर्मणि पूर्वाह्णमध्याह्नविहिते च शुक्लपक्षादि-वचनद्वयम्, अपवादविषयं परिहृत्योत्सर्गः प्रवर्तते इति न्यायात्। न च

उपोष्याः स्युः परान्विताः

इति युग्मवचने उपवासपदस्य दैवपित्र्यकर्मोपलक्षकत्वे पितृकर्मण्यपि युग्मादरोऽस्तु, ततः पारिशेष्याद्युग्मवचनाविषयतिथिमात्र एव शुक्लपक्षादिवचनमिति वाच्यम्।

शुक्लपक्षे तिथिर्ग्राह्या ( विष्णुधर्मोत्तर १.६०.२६ )

इत्यादिवचनद्वयस्यायुग्मतिथिषु निष्प्रतिपक्षतया दैवपित्र्यकर्मपरत्वस्योभयवादि-सिद्धत्वमेव। तदा च

यां तिथिं समनुप्राप्य उदयं याति भास्करः

इत्यादिदेवलवचनद्वये

1. After याति DA adds पितरस्तामुपासते. 2. SP वचनबलादस्त-. DB -संबन्धमात्रकर्तव्यता. DC, DD दैवकर्मादिमात्रे. 3. DA अयुग्म- for युग्म-. DC, DD -वचनाविशेषतिथिष्वाप-, SP -वचनतिथिभिन्नयावत्कर्मोपलक्षणविषयतिथिष्वाप-. 5. VSP अपवादः विषयं. 7. DB दैवकर्ममात्रोपलक्षकत्वे. 8. DA -वचनात्तिथि-. For शुक्लपक्षादिवचनमिति वाच्यम् DC, DD read शुक्लपक्षादिवचनद्वय एवेति वाच्यम् and SP reads शुक्लादिवचनविषयमिति वाच्यम्. 10. SP युग्म- for अयुग्म-, DC, DD -पैत्र्य- for -पित्र्य-. 11. AS -सिद्धमेव. DB तथा for तदा. 12. DB, AS, SP, VSP omit भास्करः. 13. SP इति for इत्यादि-. DA omits -देवल-. DD drops -वचन-.

१२

स्नानदानव्रतादिषु

इति दैवकर्मगणकीर्तनस्य पितृकर्मव्यावर्तकतयैव सार्थकत्वान्नोभयपरशुक्लपक्षादि-वचनैकवाक्यत्वमिति युग्मवचनैकवाक्यतावश्यं वाच्या, ततश्च युग्मवचनान्यपि दैवकर्मविषयाणीति युग्मवचने उपवासपदस्य दैवकर्ममात्रोपलक्षकत्वमिति। यद्वा, "उपोष्याः" इति येषु येषु वचनेषु श्रूयते तान्युपवासमात्रपराण्येव। अत्र यानि युग्मवचनाविरुद्धानि तानि तदुपसंहृतान्येव। युग्मवचनस्य दैवकृत्यमात्रविषयत्वेनोप-वासपरत्वस्याप्युक्तत्वात्। यानि तु तद्विरुद्धानि नान्युपवासमात्रगोचरत्वेन विशेषतयोपवासं प्रति तद्बाधकानीति न विरोधः। तानि चानुपदमेव वक्ष्याम इति। इत्थं यावन्त्येव वचनान्युदयास्तसंबन्धेन दैवपित्र्यकर्मबोधकानि तानि यथासंभवं

शुक्लपक्षे तिथिर्ग्राह्या ( विष्णुधर्मोत्तर १.६०.२६ )

इत्यादि,

युग्माग्नि

इत्यादि,

ययास्तं सविता याति

3. SP -वाक्यताया अवश्यं वाच्यम् for -वाक्यतावश्यं वाच्या. VSP inserts एव after अवश्यं. 3-4. SP omits युग्मवचनान्यपि दैवकर्मविषयाणीति. 4. DC, DD -मात्रोपलक्षित इति. 5. DC, DD, SP श्रूयन्ते for श्रूयते. DB, AS insert च after अत्र. 6. For the words from युग्मवचनाविरुद्धानि to तदुपसंहृतान्येव DC, DD read : युग्मवचनानि विरुद्धानि तदुपसंस्कृतान्येव. DC, AS देव- for दैव-. DA -कृत्यमात्रे विषयत्वे-, AS -कृत्यमात्रविषयकत्वे-. 7. DA omits तु ( after यानि ). DA omits -मात्र-. DB -परत्वेन for -गोचरत्वेन. 8. AS विषयतयोप-, SP विशेषणतयोप- (the letter ण being written in the margin). DB साधकानीति for तद्बाधकानीति. 9. VSP omits इति (after वक्ष्यामः). DC -कर्मविरोधः कानि, DD -कर्मविरोधकानि. 12. SP इति for इत्यादि. 13-14. DA omits युग्माग्नि इत्यादि.

इति त्रितयैकवाक्यतया व्यवस्थापनीयानीति। यत्तु केनचिदुक्तं

खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्।
खर्वदर्पौ परौ पूज्यौ हिंसा या पूर्वकालिकी॥

इत्युशनोवचनाद्यद्यपि सामान्यकर्मस्वेव वृद्धिस्तम्भयोः परतिथेः क्षये च पूर्वतिथेः क्रमाङ्गत्वमवगम्यते तथापि

द्वितीयादिकयुग्मानां पूज्यता नियमादिषु।
एकोद्दिष्टादिवृद्ध्यादौ वृद्धिह्रासादिचोदना॥

इति निगमस्मृतिवचनादेकोद्दिष्टादिविषयत्वं खर्वदर्पादिवचनस्येति, तत्तुच्छम्। उक्तयुक्त्या शुक्लपक्षादिवचनद्वयस्यैकोद्दिष्टादिविषयत्वस्थितौ तदेकवाक्यतया निगमस्मृतिवचनस्थह्रासवृद्ध्यादिपदस्य चन्द्रह्रासवृद्धिपरतया शुक्लकृष्णपक्षपरत्वात्। उशनोवचने

खर्वदर्पौ परौ पूज्यौ

1. DB, DC, DD इत्यादित्रितयैक-. DA द्वितीयैक- for त्रितयक-. DC, DD, VSP omit इति (after व्यवस्थापनीयानि ; SP has इति in the margin. DC, DD omit तु (after यत्). 3. DA पृष्ठौ (?) for पूज्यौ. DA, DC, DD, AS, SP, VSP हिंसायां पूर्व-. [ Though better Ms evidence is in favour of the reading हिंसायां, the reading हिंसा या is decidedly better. Cf. Kv, p. 500 (v.l. हिंसा स्यात्), Kn, pp. 144 (v.l. हिंस्रः पूर्वत्र पूज्यते ; हिंस्रः स्यात्पूर्वकालिकः), 145 (v.l. हिंस्रः स्यात्पूर्वकालिकः) and 162 (v.l. हिंसा स्यात्), Vk, p. 22 (v.l. हिंसा स्यात्), and so on. ] 4. DA इत्युशनसो वचना-. VSP परतिथिक्षये. 7. DA, DB, DC, DD एकोद्दिष्टान्दवृद्ध्यादौ. [ For the reading एकोद्दिष्टादिवृद्ध्यादौ see Kv, p. 485, Kn, pp. 124 and 144, Vk, p. 17, Śk, p. 317, St I, pp. 7, 267 and 799, and so on. In his St I, p. 799 Raghunandana explains the word एकोद्दिष्टादिवृद्ध्यादौ as :° एकोद्दिष्टादिनिमित्तीभूततिथिविशेषस्य वृद्ध्यादौ. ] 8. DB एकोद्दिष्टविषयत्वं. DC, DD तदुक्त- for उक्त-. 9. DC, DD एकोद्दिष्टविषयत्व-. 10. DA -वचनस्य ह्रासपरतया for -वचनस्थह्रासवृद्ध्यादिपदस्य चन्द्रह्रासवृद्धिपरतया. DA, VSP शुक्लकृष्णपरत्वात्, DB शुक्लपरत्वात्. 11. SP ग्राह्यौ (the original reading seems to have been पूज्यौ ) for पूज्यौ.

इति तु दर्शश्राद्धविषयम्।

यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥
( कात्यायनस्मृति १६.२ )

तथा

वर्धमानाममावास्यां लक्षयेदपरेऽहनि।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥
( कात्यायनस्मृति १६.१० )

तथा

त्रिमुहूर्तापि कर्तव्या पूर्वा दर्शा च बह्वृचैः।
कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः ॥

इति छन्दोगपरिशिष्टादिवचनैकमूलत्वादिति। अत्र "युग्माग्नि" इत्यादि वचनं शुक्लकृष्णसाधारणम्, अविशेषात्, अतः कृष्णप्रतिपदुभयपक्षदशमीशुक्लत्रयोदश्यो न युग्मवचनविषयाः, तेषु

शुक्लपक्षे तिथिर्ग्राह्या ( विष्णुधर्मोत्तर १.६०.२६ )

इत्यनेन व्यवस्थेति प्राहुः। केचित्तु

चतुर्दश्याथ पूर्णिमा,

तथा

प्रतिपदाप्यमावास्या

1. DA, VSP omit तु. DA -श्राद्धे विषयम्, VSP -श्राद्धादिविषयम्. 2. VSP inserts इति after अनुपूरयेत्. 12. DB छन्दोगपरिशिष्टैकमूलत्वादिति. DB इति for इत्यादि. AS omits वचनं. 13. DC, SP शुक्लकृष्णपक्षसाधारणम्. 13-14. DB -त्रयोदश्योरयुग्मविषयाः, DC, DD -त्रयोदश्योर्न युग्मवचनविषयाः. 14. AS तेन for तेषु. 16. DA inserts एव after इत्यनेन.

इति शुक्लपक्षीयतिथिकीर्तनात्कृष्णप्रतिपद्द्वितीयादिषु युग्मविशेषवचनाच्च

युग्माग्नि

इत्यादिवाक्यानां शुक्लपक्षीयतिथिविषयत्वमेव नोभयपक्षसाधारणतिथिविषयत्वमित्याहुः। तदैवं शुक्लप्रतिपदाद्यमावास्यान्ततिथिषु विशेष्यायं निर्णयः।

तत्र शुक्लप्रतिपदमावास्यायुतैव पूज्या,

प्रतिपदाप्यमावास्या

इति वचनात्, तथा

पञ्चमी सप्तमी चैव दशमी च त्रयोदशी।
प्रतिपन्नवमी चैव कर्तव्या संमुखी तिथिः॥

इति पैठीनसिवचनाच्च। संमुखी पूर्वविद्धेत्यर्थः। यत्तु

प्रतिपत्संमुखी ग्राह्या या भवेदापराह्णिकी

इति स्कन्दपुराणनाम्ना पठितं तदनाकरम्। साकरत्वे वा शुक्लकृष्णपक्षयोरापराह्णिकपितृकृत्यविषयं

ययास्तं सविता याति

इति समानार्थम्॥

1. VSP -विषय- for -विशेष-. 4. DB, SP, VSP तदेवं for तदैवं. DB विशिष्यायं DB, DC नियमः for निर्णयः. 5. DC ततः for तत्र. DB, SP ग्राह्या, DC, DD कार्या for पूज्या. 9. DB, DC, DD सांमुखी. 10. SP omits च (after -वचनात्). DB, DC, DD, SP सांमुखी. DB, DC insert एव after पूर्वविद्धा. 11. [The line प्रतिपत्संमुखी is not found in the Skanda-purāṇa (Vaṅga. and Veṅkaṭ editions)]. DB सांमुखी for संमुखी. 12. DA -पुराणोक्तमिति पठन्ति तदना-. AS omits वा 12-13. AS -पक्षसाधारणापराह्णिक-, VSP -पक्षीयापराह्णिक-.

कृष्णा तु प्रतिपद् द्वितीयायुतैव ग्राह्या,

प्रतिपत्सद्वितीया स्याद् द्वितीया प्रतिपद्युता

इति मदनपारिजातलिखितापस्तम्बवचनात्। उपवासे तु कृष्णप्रतिपदपि पूर्वयुतैव ग्राह्या। तथा च बृहद्वशिष्ठः

द्वितीया पञ्चमी वेधाद्दशमी च त्रयोदशी।
चतुर्दशी चोपवासे हन्युः पूर्वोत्तरे तिथी॥
उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम्॥

इति। द्वितीयाप्रभृतयस्तिथयः उपवासेषु वेधात्पुर्वोत्तरे तिथी हन्युः, सप्तमी तु स्ववेधात्स्वोत्तरामेव तिथिं हन्तीत्यर्थः। एवं च प्रतिपत्तृतीया च द्वितीयाविद्धा नोपोष्येत्युक्तम्। एवं पञ्चम्यादिष्वपि बोध्यम्। न च वाच्यं

प्रतिपत्सद्वितीया स्यात्

इति वचनात्कृष्णप्रतिपद्विहितोपवासादि सर्वं द्वितीयावेध एवास्तु,

हन्युः पूर्वोत्तरे तिथी

इति द्वितीयाविद्धनिषेधस्तु शुक्लप्रतिपद्विषय एव,

1. DA द्वितीयया for द्वितीया-. 4. VSP omits च. AS वृद्धवशिष्ठः. 8. DB omits इति. DC, DD omit तिथयः. For उपवासेषु वेधात् AS, VSP read उपवासे स्ववेधात्. (The original reading in AS seems to have been उपवासेषु वेधात्). 8-9. DB सप्तमीषु स्ववेधा-. 9. DB वेधाद्योत्तरामेव, DC स्ववेधाद्योत्तरामेव for स्ववेधात्स्वोत्तरामेव. 9. DA omits द्वितीया-. 10. DC, DD पञ्चम्यादितिथिष्वपि. DB बोद्धव्यम् for बोध्यम्. DB, AS omit न च वाच्यम्. 12. SP द्वितीयाविद्धा एवास्तु. VSP omits अस्तु. 14. DB इत्यादि for इति. DB द्वितीयानिषेधस्तु, DC, DD द्वितीयाविद्धनिषेधोऽस्तु, SP द्वितीयाविद्धानिषेधस्तु. DA inserts अस्तु after एव.

प्रतिपदाप्यमावास्या

इति युग्मवचनादिति।

कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः

इति सामान्यवचनस्याबाधेनोपवासविधायकविधीनां विषयव्यवस्थासंभवेऽन्यथाकल्पनां विधाय तद्बाधायोगादिति ॥

द्वितीया तु शुक्ला तृतीयायुक्तैवोपवासादिसर्वकर्मसु ग्राह्या,

युग्माग्नि

इति वचनात्, तथा

एकादश्यष्टमी षष्ठी द्वितीया च चतुर्दशी।
त्रयोदश्यप्यमावास्या उपोष्याः स्युः परान्विताः ॥

इति शिवरहस्यवचनाच्च। यत्तु

द्वितीयैकादशी षष्ठी तथा चैवाष्टमी तिथिः।
वेधादधस्ताद्धन्युस्ता उपवासे तिथीस्त्विमाः ॥
उपवासे सप्तमी तु वेधाद्धन्त्युत्तरं दिनम्।
पक्षयोरुभयोश्चैव उपवासे विधिः स्मृतः ॥

इति नारदवचने द्वितीयाद्यास्तिथयस्तृतीयादियुता नोपोष्या इत्युक्तं तत्कृष्णाद्वितीया-विषयम्,

3. DB, DC, DD omit यस्यामस्तमितो रविः. 4. DC, DD इत्यादिसामान्यवचनस्य बाधेनो-. DA -कल्पनानां, SP -कल्पनं for -कल्पनां. 5. DB, SP विहाय for विधाय. SP तद्बाधकायोगादिति. 6. SP omits तु. DC, DD शुक्लतृतीयायुतैव for शुक्ला तृतीयायुक्तैव. DC, DD transpose उपवासादिसर्वकर्मसु and ग्राह्या. 8. DC, DD इत्यादि- for इति. 11. DB omits च. 12. DA, DC, DD, SP, VSP तृतीयैकादशी for द्वितीयैकादशी [For the reading द्वितीयैकादशी see St I, p. 29. Cf. also line 16 below.] DB भवेत् for तिथिः. 16-17. DB कृष्णद्वितीयादिविषयम्.

शुक्लपक्षे तिथिर्ग्राह्या ( विष्णुधर्मोत्तर १.६०.२६ )

इत्यादिवचनात्,

एकादश्यष्टमी

इत्यादिवचनाच्च शुक्लद्वितीयायाः परयुताया एवोपोष्यत्वप्रतिपत्तेरिति । उपवासातिरिक्तेऽपि दैवे कर्मणि कृष्णद्वितीया प्रतिपद्युतैव ग्राह्या,

प्रतिपत्सद्वितीया स्याद् द्वितीया प्रतिपद्युता

इति पैठीनसिवचनात्,

द्वितीया प्रतिपद्युता

इति ब्रह्मवैवर्तवचनाच्च ॥

तृतीया तु चतुर्थीयुतैवोपवासादिसर्वदैवकर्मसु ग्राह्या,

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी ।
अमावास्या तृतीया च उपोष्याः स्युः परान्विताः ॥

इति स्कन्दपुराणवचनात्,

प्रतिपत्सद्वितीया स्याद् द्वितीया प्रतिपद्युता ।
चतुर्थीसंयुता या च तृतीया सा फलप्रदा ॥

1. After ग्राह्या DA, AS, VSP add यस्यामभ्युदितो रविः. 2. DB, SP इति for इत्यादि-. 3. SP omits अष्टमी. DA adds चैव after अष्टमी. 4-5. DC, DD उपवासातिरिक्तदैवे. 5. SP दैवकर्मणि. DB कृष्णा द्वितीया. DA प्रतिपद्युपरतैव ( ? ), DB प्रतिपद्युक्ता for प्रतिपद्युतैव. 6. After line 6 SP inserts : चतुर्थीसंयुता या च सा तृतीया फलप्रदा. 9. VSP ब्रह्मपुराणवचनाच्च. 10. DA omits तु. DB -सर्वकर्मसु, AS -कर्मसु सर्वदैव, SP -दवकर्मसु for -सर्वदैवकर्मसु. 13. SP, VSP -पुराणात् for -पुराणवचनात्. 15. DA च for सा.

इत्यापस्तम्बवचनाच्च। यत्तु युग्मवचने

युग्माग्नि

इत्यनेन द्वितीयाविद्धतृतीयाग्रहणमुक्तं तद्रम्भातृतीयामात्रविषयं बोद्धव्यम्। तदुक्तं ब्रह्मवैवर्ते

रम्भाख्यां वर्जयित्वा तु तृतीयां द्विजसत्तम।
अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते॥

गणयुक्ता चतुर्थीयुक्तेत्यर्थः। एवं च

द्वितीया पञ्चमी वेधात्

इति द्वितीयाविद्धतृतीयानिषेधो रम्भातृतीयाव्यतिरिक्तविषयः, यदुक्तं निगमे

कृष्णाष्टमी बृहत्तल्पा सावित्री वटपैतृकी।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः॥

इति। तथा ब्रह्मवैवर्ते

तृतीया तु न कर्तव्या द्वितीयासहिता विभो।

तथा

1. DB, AS omit च (after -वचनात्). DB युग्मवचनेन. SP omits युग्मवचने. 3. SP इत्यादिना for इत्यनेन. DA द्वितीयाविरुद्धतृतीया-. VSP omits -मात्र-. 3-9. DD repeats all the words from -तृतीयामात्रविषयं to द्वितीयाविद्ध-. 3. DB बोध्यम् for बोद्धव्यम् 5. DB, SP, VSP मुनि- for द्विज-. [ The reading द्विजसत्तम is found in Sc IV, p. 46, Kn, p. 175, and Vk, p. 25, whereas मुनिसत्तम occurs in Vv, p. 11 and St I, p. 30. ] 7. VSP omits इत्यर्थः. 9. DA द्वितीयाविरुद्धतृतीया-. DB, DC, DD, SP तदुक्तं for यदुक्तं. 10. DA व्रत- for (after correction from बृहत्तल्पा), DB, DD बृहत्तपा. DA व्रत- for वट-. 13. For the line तृतीया तु etc. DC reads तृतीयासहिता विभो (haplologically omitting तु न कर्तव्या द्वितीया-). DB च for तु. DA transposes तु and न. 14. SP omits तथा.

द्वितीयाशेषयुक्तां यस्तृतीयां कुरुते नृप।
स याति नरकं घोरं कालसूत्रं भयंकरम्॥

तथा स्कन्दपुराणे

कला काष्ठात्मिका चैव द्वितीया संप्रदृश्यते।
सा तृतीया न कर्तव्या कर्तव्या गणसंयुता॥

इति॥

चतुर्थी पञ्चमीयुतैव ग्राह्या,

कृतभूतानि

इति वचनात्,

एकादश्यष्टमी षष्ठी अमावास्या चतुर्थिका।
उपोष्याः परसंयुक्ताः पराः पूर्वेण संयुताः॥

इत्यग्निपुराणवचनाच्च। यत्तु ब्रह्मवैवर्तवचनं

चतुर्थीसंयुता कार्या तृतीया च चतुर्थिका।
तृतीयया युता नैव पञ्चम्या कारयेत्क्वचित्॥

1. DB -शेषसंयुक्तां तृतीयां. DB, AS नरः for नृप 2. DA, VSP -सूत्रं भयानकम्. 3. DB, AS, VSP insert च after तथा. [4-5. The verse कला काष्ठात्मिका etc. is not found in the present Skanda-p.] 6. DC, DD omit इति. 7. DA, SP insert तु after चतुर्थी. 12. VSP -पुराणाच्च for -पुराणवचनाच्च. DB -वैवर्ते, DC -वैवर्ते वचनं for -वैवर्तवचनं. 14. DB तृतीयासंयुता for तृतीयया युता. DA चैव for नैव

तथा वचनान्तरं

चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते

इत्यादि तद्विनायकव्रतविषयम् ॥

पञ्चमी चतुर्थीयुतैव ग्राह्या, युग्मवचने

कृतभूतानि

इत्युक्तेः। स्कन्दपुराणे च

पञ्चमी च तथा कार्या चतुर्थीसहिता विभो

इति। यत्तु

पञ्चमी तु प्रकर्तव्या षष्ठ्या युक्ता तु नारद।
न हि षष्ठी नागविद्धा कर्तव्या तु कदाचन॥

इति ब्रह्मवैवर्तवचनं तच्छुक्लपञ्चमीविषयम्।

शुक्लपक्षे तिथिर्ग्राह्या ( विष्णुधर्मोत्तर १.६०.२६ )

1. DA, DB insert च after तथा 2. DB नागविद्धा for मातृविद्धा. 3. VSP -व्रतपरम् for -व्रतविषयम्. 4. DC, DD, AS insert तु after पञ्चमी. DB युग्मवचनेन. 6. DA inserts अपि after -पुराणे. DC, DD omit च. AS, SP अपि for च. 7. [ The line प्रञ्चमी च is not found in the present Skanda-p. ] DB विभोः. 8. DC, DD, SP omit इति. 9. DB षष्ठीयुक्ता. 10. DC, DD प्रकर्तव्या नागविद्धा for नागविद्धा कर्तव्या तु. 11. DB तच्छुक्लपक्षपञ्चमी-परविषयम्, SP तच्छुक्लपक्षपञ्चमीविषयम्. 12ff. DC, DD शुक्लपक्षेत्यादि- for शुक्लपक्षे तिथिर्ग्राह्या इत्यादि- (the word इत्यादि occurring in line 1 on p. 100).

इत्यादिसामान्यवचनैकमूलत्वे संभवति तद्वाधस्यान्याय्यत्वात्। नागपञ्चमीविषय-त्वव्याख्यानमपि मदनपारिजातोक्तमत एव हेयमिति ॥

षष्ठी तु सप्तमीयुतैव ग्राह्या, युग्मवचने

षण्मुन्योः

इत्युक्तत्वात्। तथा स्कन्दपुराणे

नागविद्धा न कर्तव्या षष्ठी चैव कदाचन।
सप्तमीसंयुता सा तु कार्या धर्मार्थचिन्तकैः ॥

तथा विष्णुधर्मोत्तरे

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।
अमावास्या तृतीया च उपोष्यास्ताः परान्विताः ॥

तथा शिवरहस्यसौरपुराणयोः

नागविद्धा तु या षष्ठी शिवविद्धा तु सप्तमी।
दशम्येकादशीविद्धा नोपोष्याः स्युः कदाचन ॥

1. After अन्याय्यत्वात् DA, DC, DD insert : "तथा, माघे मासि सिते पक्षे पञ्चमी या श्रियः प्रिया। तस्या एवेह परतः (DA तस्याभ्युदय एवाह for तस्या एवेह परतः ) कार्यः सारस्वतोत्सवः ॥ इति पठितमेतद्विषयमिति (DA पठितमप्येतद्विषयम् for पठितमेतद्विषयमिति ", whereas SP inserts : "कालमाधवीये हारीतवचनम्—चतुर्थीसंयुता कार्या पञ्चमी परया न तु। दैवे कर्मणि पित्र्ये च शुक्लपक्षे तथासिते ॥". 3. SP, VSP omit तु. 4. DB inserts वसुरन्ध्रयोः after षण्मुन्योः. [ 6-7. The verse नागविद्धा etc. is not found in the Skanda-p. ] 7. DC, DD या तु, VSP सापि for सा तु. DB, VSP धर्मार्थसाधकैः for धर्मार्थचिन्तकैः. 10. DC, DD, AS, SP, VSP transpose उपोष्याः and ताः. 11. DC, DD -शैव- for -सौर-. 12. DB च for तु (after नागविद्धा ). DB, SP च for तु (after शिवविद्धा). 13. DD, AS, VSP कथंचन for कदाचन.

(सौरपुराण ५१.१०) इत्यत्र पञ्चमीयुक्तायां षष्ठ्यामुपवासप्रतिषेधोऽवगम्यते ॥

स्कन्दषष्ठी तु पञ्चमीयुतोपोष्या,

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी ।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत् ॥

इति ब्रह्मवैवर्तवचनात् । तथा निगमः

नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुर्न ग्राह्यास्ते तु वासराः ॥

इति । नागः पञ्चमी, रुद्रोऽष्टमी, दिवाकरः सप्तमी, विष्णुर्द्वादशी ॥

सप्तमी तु षष्ठीयुतैव ग्राह्या,

षण्मुन्योः

इत्युक्तत्वात् । स्कन्दपुराणेऽपि

षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी ।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम् ॥
षष्ठ्या युता सप्तमी च कर्तव्या तात सर्वदा ।
षष्ठी च सप्तमी यत्र तत्र संनिहितो हरिः ॥

1. DB, DC, DD, AS पञ्चमीयुतायां. DC, DD -मुपवासे प्रतिषेधो-. 2. DC, DD इति, AS च for तु. 6. DB, DD च for तु. 8. DA omits इति. DB omits दिवाकरः सप्तमी. DC, AS, SP insert इति after द्वादशी. 11. AS omits अपि. [12-15. These two verses are not found in the present Skanda-p.] 14. DA षष्ठीयुता. [For the reading षष्ठ्या युता see St I, p. 35.] VSP सा तु for तात. 15. DB तु for च. DC, AS रविः for हरिः.

शुक्लाष्टमी तु नवमीयुतैव ग्राह्या,

वसुरन्ध्रयोः

इति स्मरणात्। ब्रह्मवैवर्तेऽपि

सप्तमी नाष्टमीयुक्ता सप्तम्यापि न चाष्टमी।
सर्वेषु व्रतकल्पेषु अष्टमी परतः शुभा॥

परतो नवमीयुक्तेत्यर्थः। तथा स्कन्दपुराणे

अष्टमी नवमीमिश्रा कर्तव्या भूतिमिच्छता।
सप्तमीसहिता सेयं न कर्तव्या शिखिध्वज॥

सर्वं चैतच्छुक्लाष्टमीविषयम्।

शुक्लपक्षेऽष्टमी चैव शुक्लपक्ष चतुर्दशी।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता।
उपवासादिकार्येषु ह्येष धर्मः सनातनः॥

इति निगमस्मृतेः॥

कृष्णाष्टमी तु सप्तमीयुता ग्राह्या,

1. DC, DD, VSP omit तु. 3. DB वचनात् for स्मरणात्. 4. DA नागषष्ठीयुक्ता for नाष्टमीयुक्ता. VSP च for अपि 5. VSP inserts इति after शुभा. 6. DC, DD, AS, SP, VSP -पुराणम्. [7-8. The verse अष्टमी नवमीमित्रा is not found in the present Skanda-p.] 8. DA, SP चेयं, DB शेषं for सेयं. [For the reading सेयं see *Vk*, pp. 27 and 382.] DB कर्तव्यं for कर्तव्या. 10. AS चैवं for चैव. 11. VSP inserts इति after परसंयुता. 12. DB -कल्पेषु for -कार्येषु. DC, DD, AS omit हि 13. DA omits निगम-. 14. DB, DC, VSP -युक्ता for -युता.

वसुरन्ध्रयोः

इति सामान्ययुग्मवाक्यस्य विशेषवचनेन बाधात्। तथा च निगमः

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी।
पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित्॥

दूर्वाष्टमी तु शुक्लपक्षगतापि पूर्वविद्धैव ग्राह्या। यदाह बृहस्पतिः

श्रावणी दौर्गनवमी दूर्वा चैव हुताशनी।
पूर्वविद्धैव कर्तव्या शिवरात्रिर्बलेर्दिनम्॥

इति। हुताशनी रम्भातृतीया॥

नवमी तु अष्टम्यनुगता ग्राह्या,

वसुरन्ध्रयोः

इत्युक्तत्वात्। ब्रह्मवैवर्तेऽपि

अष्टम्या नवमी विद्धा कर्तव्या फलकाङ्क्षिभिः॥

स्कन्दपुराणभविष्यपुराणयोः

न कुर्यान्नवमीं तात दशम्या च कदाचन॥

2. DC, DD, AS omit -युग्म-. DB, DC, DD, VSP -वचनस्य for -वाक्यस्य. DA, DC, DD omit च (after तथा). 5. DC, DD तथा for तु. DA शुक्लापि, DC, DD शुक्लगतापि, AS, VSP शुक्लागतापि for शुक्लपक्षगतापि. SP कार्या, VSP कर्तव्या for ग्राह्या. 6. DA (after correction from श्रावणी दौर्ग-) श्रावणदौर्ग-. DA युताष्टमी for हुताशनी. 8. DA omits 'इति। हुताशनी रम्भातृतीया'. 9. DB अष्टमीयुता for तु अष्टम्यनुगता. DA inserts एव after अष्टम्यनुगता. 13. AS स्कन्दभविष्यपुराणयोः 14. DB कार्या नवमी for कुर्यान्नवमीं. VSP भद्रे for तात.

पद्मपुराणे

नवम्येकादशी चैव दशाविद्धा यदा भवेत्।
तदा वर्ज्या विशेषेण गङ्गाम्भः सुरया यथा ॥

दशमी तु पूर्वविद्धा कार्या। स्कन्दपुराणे

दशमी चैव कर्तव्या सदुर्गा द्विजसत्तम ॥

तथापस्तम्बोऽपि

अष्टमी नवमीविद्धा कर्तव्या फलकाङ्क्षिभिः।
दशमी च प्रकर्तव्या सदुर्गा द्विज सर्वदा ॥

इति। एतच्च दिनद्वयेऽप्युदयाव्याप्तौ, परदिने उदयसंबन्धे तु पूर्वा परा वा विकल्पेन ग्राह्या, यथाहाङ्गिराः

संपूर्णा दशमी कार्या पूर्वया परयाथवा।
युक्ता न दूषिता यस्मादिति सा सर्वतोमुखी ॥

इति केचित्। वस्तुतस्तु

शुक्लपक्षे तिथिर्ग्राह्या (विष्णुधर्मोत्तर १.६०.२६)

2. DB च या for यदा. 4. SP ग्राह्या for कार्या. SP inserts यथा before स्कन्दपुराणे. 5. After सदुर्गा DA inserts नवमी which is placed in the margin. 6. VSF तथापस्तम्बेऽपि. 7. VSP अष्टम्या नवमी विद्धा for the first half. 8. DC, DD द्विजसत्तम for द्विज सर्वदा. 9. VSP omits इति. AS तु for च (after एतत्). SP उदयप्राप्तौ for उदयाव्याप्तौ. DA उभयसंबन्धे for उदयसंबन्धे DB च foı तु. DC, DD omit तु. 10. SP यदाह for यथाह. 11. VSP ग्राह्या for कार्या. 12. DB वामयुक्ता न भूषिता यस्मात्सा सर्वतोमुखी for the line युक्ता न etc. [For the reading युक्ता न दूषिता etc. see Kn, pp. 148 and 231, St I, p. 62, and so on.]. 14. DA adds यस्याम् after ग्राह्या.

इत्यादिसामान्यवचनाच्छुक्लपक्षकृष्णपक्षविपयतयोदयास्तव्यापिन्योर्व्यवस्थितो विकल्प इति ॥

एकादशी तु परयुता ग्राह्येत्युत्सर्गः,

रुद्रेण द्वादशी युक्ता

इति स्मरणात्। विशेषस्तु प्रसङ्गादुच्यते।

अत्र चायमुपवासो व्रतरूप आवश्यकः। तदुक्तं वराहपुराणे

एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने।
शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत्॥
यो गृहीत्वा व्रतं मोहादेकादशीदिने नरः।
न समापयते तस्य गतिः पापीयसी भवेत्॥

इति। अत्रोपवासे व्रतशब्दश्रवणादहोरात्राभोजनसंकल्पात्मकव्रतरूपता प्रतीयते। यथा विष्णुधर्मोत्तरे

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
एकादश्यां हि भुञ्जानो विष्णुलोकाच्च्युतो भवेत्॥

1. DB, SP, VSP इति for इत्यादि-. SP शुक्लकृष्णपक्ष-. DB -विषयतोदयास्त-. DC, DD, VSP -र्व्यवस्थितविकल्प-. 2. VSP omits इति (after विकल्पः). 3. DC, DD, VSP परयुक्ता. DA इत्यनुषङ्गः for इत्युत्सर्गः. 6. DA omits च. DB व्रतस्वरूप-. AS, VSP insert च after आवश्यकः. SP ब्रह्मपुराणे for वराहपुराणे. 8. DD haplologically omits तद्व्रतं वैष्ण-. 11. DC, DD omit इति. AS, SP, VSP अत्रोपवासव्रतशब्द-. 12. DC, DD, AS, SP, VSP तथा for यथा. 14. DB न for हि. SP ब्रह्म- for विष्णु-. DA, DC, DD, VSP -लोकाच्युतो. [ For the reading विष्णुलोकाच्च्युतो भवेत् see Kv, p. 426, Np, p. 465, St II, p. 23, and so on ]. VSP inserts इति after भवेत्.

तथा

प्रतिग्रासं स भुङ्क्ते तु किल्विषं श्वानविट्समम् ।
एकादश्यां द्विजश्रेष्ठ यो भुङ्क्तेऽन्नं द्विजो मनाक् ॥

तथा भविष्ये

यानि कानि च पापानि ब्रह्महत्यादिकानि च ।
अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे ॥
अघं स केवलं भुङ्क्ते यो भुङ्क्ते हरिवासरे ।
तद्दिने सर्वपापानि भवन्त्यन्नाश्रितानि च ॥

अत्र भोजने दोषश्रुतेर्नित्यत्वं प्रतीयते। अतो नारदीयपुराणादौ यत्फलकीर्तनं तदानुषङ्गिकम्, यावन्नित्यकर्मानुष्ठानाद्ब्रह्मलोकप्राप्त्यादिवदिति। यथा नारदीये (२.१. १२-१३, १०, १५, १६-१८, २१)

तावत्पापानि देहेऽस्मिंस्तिष्ठन्ति मनुजाधिप ।
यावन्नोपवसेज्जन्तुः पद्मनाभदिनं शुभम् ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
एकादश्युपवासस्य कलां नार्हन्ति षोडशीम् ॥

1. DA omits तथा. 2. DB भुञ्जीत for स भुङ्क्ते तु. DA मूत्रविट्समम्, DB श्वानविड्मयम्, DC श्वानमिविट्समम् (?), DD क्रमानमिविट्समम् (?) for श्वानविट्समम्. [ For the reading श्वानविट्समम् see St II, p. 23 ]. 3. DB भुङ्क्ते योऽन्नं for यो भुङ्क्तेऽन्नं. DC, AS, SP, VSP insert इति after मनाक्. 8. AS, VSP तु for च. 9. DB, AS, VSP भोजनदोष-. DC, DD ततो for अतो. DB, SP, VSP transpose नारदीयपुराणादौ and यत्. DC, DD insert अत्र before यत्. AS, SP, VSP insert अत्र before फलकीर्तनं. 10. VSP omits यावत्. DA नित्यनैमित्तिकानुष्ठानात्. DC, DD -प्राप्तादिवत्, SP -प्राप्त्यादिश्रुतेः for -प्राप्त्यादिवत्. DA, SP omit इति. VSP तथा for यथा DC, DD नारदीयपुराणे.

एकादशीसमुत्थेन वह्निना पापकेन्धनम् ।
भस्मतां याति राजेन्द्र अपि जन्मशतोद्भवम् ॥
एकादशीसमं किंचित्पापत्राणं न विद्यते ।
स्वर्गमोक्षप्रदा ह्येषा राज्यपुत्रप्रदायिनी ।
सुकलत्रप्रदा ह्येषा शरीरारोग्यदायिनी ॥
न गङ्गा न गया भूप न काशी न च पुष्करम् ।
न चापि कौरवं क्षेत्रं नर्मदा न च देविका ।
यमुना चन्द्रभागा च तुल्या भूप हरेर्दिनैः ॥
अनायासेन राजेन्द्र प्राप्यते वैष्णवं पदम् ।
चिन्तामणिसमा ह्येषा अथवापि निधेः समा ॥

इत्थमस्य नित्यत्वे व्रतपक्षेऽप्यशक्तौ किंचिदङ्गवैगुण्येऽपि प्रधानस्योपवासस्य कर्तव्यता । नित्ये किंचिदङ्गहान्यापि कतव्यतायाः स्वीकृतत्वादिति । अन्यस्तु

दशम्यां नियताहारो मांसमैथुनवर्जितः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥

इति मत्स्यपुराणवचनाद्रागप्राप्तभोजननिषेधरूपता पूर्वोक्तव्रतादिशब्दश्रुतेश्च व्रतरूपता-

1. DC, DD पावकेन्धनम्, SP पातकेन्धनम्. [The Nāradīya-p. reads पातकेन्धनम्]. 4-5. SP omits 'राज्यपुत्रप्रदायिनी । सुकलत्रप्रदा ह्येषा' haplologically. 5. VSP omits the entire line सुकलत्रप्रदा etc. 7. DB, VSP transpose न and च (before देविका). DB वेदिका, SP गोमती for देविका. 8. VSP न for च. DA, AS, VSP दिने for दिनैः. [In the Nāradīya-p., in Sc IV, p. 54, and in Kn, p. 274 the reading is दिनात्]. 9. DB, DC, DD, VSP पुरम् for पदम्. 10. VSP inserts इति after निधेः समा. 11. VSP inserts च after अस्य. SP -वैगुण्येनापि. VSP omits अपि (after -वैगुण्ये). 12. DA inserts हि after नित्ये. DB कर्तव्यतास्वीकारात् for कर्तव्यतायाः स्वीकृतत्वात्. DB omits इति. [13-14. This verse is not found in the present Matsya-p.]. 15. DC, DD, AS, SP -पुराणादिवचनात्. DA पूर्वोक्तवचनेषु व्रतशब्द-. DA, SP omit च (after श्रुतेः).

पीति द्व्यात्मकत्वमस्य ; स चायं वैष्णवावैष्णवसर्ववर्णानुलोमजप्रतिलोमजानां साधारणो ब्रह्महत्याप्रतिषेधवद्वेदितव्यः, अधिकारिविशेषाश्रवणात् ; अत एकादशी-भोजननिवृत्तौ न दशम्यादिनियमविशेषो न वा संकल्पः ; न च वाच्यम्

एकादश्यां न भुञ्जीत

इत्यस्य निषेधरूपत्वे

तत्र पूज्ये विधेर्वृत्तिर्निषेधः कालमात्रके

इति वचनादेकादशीलक्षणमतिवाह्य भोजनप्रसङ्ग इति ; यत एकादशीपदं तदवच्छिन्नपूज्याहोरात्रपरमेवेति कुतस्तद्दिने भोजनप्रसङ्ग इति ; लक्षणाकारणं च मत्स्यपुराणवचनम् , यथा

रटन्तीह पुराणानि भूयो भूयो वरानने ।
न भोक्तव्यं न भोक्तव्यं संप्राप्ते हरिवासरे ॥

अत्र वासरपदेनाहोरात्रपरत्वप्रत्यायनादिति ; व्रतस्याप्यस्य

तद्व्रतं वैष्णवं महत्

इत्यभिधानाद्वैष्णवानामुपात्तदुरितक्षयः फलं नित्याग्निहोत्रवदित्याह । वस्तुतस्तु

1. DA omits इति (before द्व्यात्मक-). DB inserts इति after अस्य. 1-2. DA -वर्णानुलोमजानां साधारणो-. 2. SP, VSP ब्रह्महत्यादि- for ब्रह्महत्या-. VSP omits -प्रतिषेध-. DA ज्ञेयः, SP ज्ञातव्यः for वेदितव्यः. DA, DC, DD अत एव for अतः. 7. DB, DC, DD अभिवाह्य for अतिवाह्य. DA, DC,DD omit इति (after भोजनप्रसङ्गः). 8. DB omits च. [ 10-11. The verse रटन्तीह पुराणानि, which is not found in the present Matsya-p., is the same as Nāradīya-p. II. 24.23b-24a ]. 12. DC, DD वासरपदम- ( DD drops -म-.) होरात्र-. VSP -प्रत्ययादिति. SP व्रतत्वमप्यस्य for व्रतस्याप्यस्य.

तद्व्रतं वैष्णवम्

इत्यादौ व्रतशब्दश्रुतेरस्य व्रतरूपत्वं स्वीकुर्महे न तु नित्यत्वम्, मानाभावात्फलश्रुतेश्च। न च पूर्वोक्तदोषश्रुतिरेव नित्यत्वे बीजमिति वाच्यम्। निषेधप्रकरणस्थदेवलवचने

न शङ्खेन पिबेत्तोयं न खादेत्कूर्मशूकरौ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥

इत्यादौ नञो निषेधे मुख्यत्वाद्भोजनाभाव एव प्रतीयते न त्वभोजनसंकल्परूपः, लक्षणाप्रसङ्गात्। एकेनैव मत्स्यपुराणकृता

दशम्यां नियताहारो मांसमैथुनवर्जितः।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥

इति दशमीनियमपूर्वकं व्रतमभिधाय

रटन्तीह

इत्यादिना 'न भोक्तव्यम्' इत्यादिविधेरनन्यगतिकतया निषेधस्याप्यावश्यकत्वं

1-2. DA omits तद्व्रतं वैष्णवमित्यादौ. 1. VSP adds महत् after वैष्णवम्. 2. SP -पद- for -शब्द-. DA प्रमाणाभावात् for मानाभावात्. DD, AS omit च (after फलश्रुतेः). 3. DB नित्यत्वेवं (?) for नित्यत्वे बीजम्. [ 3ff. In his St II, pp. 15-16 Raghunandana quotes the passage from 'निषेधप्रकरणस्थदेवलवचने' to 'व्रतस्य नित्यत्वे प्रमाणम्' (on p. 110, line 2) ]. 3. DC, DD, VSP -प्रकरणस्थे देवल-. DB -वचनेन. 4. DC, DD insert अपि after शङ्खेन. [ 4-5. The verse न शङ्खेन is the same as Nāradīya-p. II.24.3b-4a and 25.12. ] 6. DB omits एव. DC, DD -रूपसंकल्पः for -संकल्परूपः. [ Raghunandana reads '-संकल्परूपं व्रतम्' for 'संकल्परूपः'. See St II, p. 15 ]. 7. DA inserts प्रमाणाभावात् before लक्षणाप्रसङ्गात् and च after it. [ 8-9. This verse is not found in the present Matsya-p. ]. 10. DC, DD -नियमपूर्वकव्रत-. 11. DA adds पुराणानि after रटन्तीह. 12. DA निषेधकस्य for निषेधस्य.

वाच्यम्। तदा च निषिद्धे भोजने दोषश्रवणं निषेधातिक्रमजन्यतयैवोपपद्यमानं न फलश्रुत्या काम्यतया निरूढस्य व्रतस्य नित्यत्वे प्रमाणं भवितुमीष्टे, अतोऽस्य काम्यव्रतरूपता निषेधरूपता चेत्येतदेव युक्तमुत्पश्यामः। अत्र चोपवासे फलश्रुतावपि न तस्याङ्गित्वम्, किंतु द्वादश्यां विष्णूपासनं प्रधानं प्रत्यङ्गत्वमेव,

एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः।
उपासनाय द्वादश्यां विष्णोर्यद्वदिदं तथा॥

इति भविष्यपुराणवचने विष्णूपासनार्थतयोपकारकत्वश्रुतेस्तथात्वावधारणात्। फलश्रुतिश्च प्रधानजन्यफलं प्रत्यङ्गस्यापि सहकारित्वेन परंपरया वर्णनीयेति॥

## अथ दशमीनियमाः॥

मत्स्यपुराणे

दशम्यां नियताहारो मांसमैथुनवर्जितः॥

1. AS, SP तथा for तदा. [Raghunandana also reads तथा—See St II, p. 16]. DB निषिद्धे च भोजने, SP निषिद्धभोजने for निषिद्धे भोजने. DB दोषदर्शनं, DC, AS दूषणं, VSP दूषणश्रवणं for दोषश्रवणं. DA निषेधातिक्रमणजन्यप्रत्यवायप्रतिपादकतयैव for निषेधातिक्रमजन्यतयैव. DA omits न. VSP inserts तु after न. 2. DB omits -व्रत-. 3. VSP omits निषेधरूपता. DA omits एतत्. DC, DD, AS, SP insert इति after उत्पश्यामः. DC, DD, VSP चोपवासफल-. 4. DB, DC प्रधानत्वम् for अङ्गित्वम्. DC, DD विष्णोरुपासनं. 7. DB भविष्यपुराणोक्तवचने, SP भविष्यपुराणे for भविष्यपुराणवचने. DC, DD विष्णूपासनतया, SP विष्णूपासनायाः for विष्णूपासनार्थतया. DA उपकारत्वश्रुतेः, DB उपकारकत्वावगतेः, VSP उपकारकत्वस्थितेः for उपकारकत्वश्रुतेः. 8. DA प्रधानजन्यं, DB प्रधानजन्यं फलं for प्रधानजन्यफलं. DC, DD, AS प्रत्यङ्गत्वस्यापि. SP वर्णनीयमिति. 9. DB, VSP तत्र for अथ. DB दशमीनिर्णयः. 10. VSP omits मत्स्यपुराणे. [11. The line दशम्यां नियताहारो etc. is not found is the present Matsya-p.].

इति । नियतोऽनिषिद्ध इत्यर्थः । विष्णुधर्मोत्तरे

कांस्यं मांसं मसूरं च पुनर्भोजनमैथुनम् ।
द्यूतमत्यम्बुपानं च दशम्यां वर्जयेद्बुधः ॥

एकादश्यामुपवाससंकल्पविधिश्च पुराणोक्तो ग्राह्यः । यथा

गृहीत्वौडुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वा संकल्पयेद्बुधः ॥

वराहपुराणे

एकादश्यां निराहारो भूत्वा चैवापरेऽहनि ।
भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ॥

तथा नियमविशेषः पुराणोक्तः

1. DB omits इति ( before नियतो- ). DA, VSP मासं, DB माषं for मांसं. [Kn, p. 265 and St I, p. 110 read मांसं, whereas Vk, p. 63 and St II, p. 56 read माषं]. [Kn, p. 265 and St I, p. 110 and II, p. 56 read पुनर्भोजनमैथुने, whereas the reading -मथुनम् is found in Vk, p. 63]. 3. After बुधः VSP inserts : 'इति । मत्स्यपुराणे ।'. 4. DB omits -विधि-. DC, DD, AS मत्स्यपुराणोक्तो for पुराणोक्तो. [The verse गृहीत्वौडुम्बरं पात्रं etc. is ascribed to the Mahābhārata in Kv, p. 456, Vv, p. 8, Vk, pp. 61 and 66, and St II, pp. 8 and 152 ; to Devala in Sc IV, p. 62 ; and to the Varāha-p. in Kn, p. 267, St I, pp. 67 and 110 and II, pp. 8 and 57, and Dpt, p. 5. So, the reading पुराणोक्तो is preferred to मत्स्यपुराणोक्तो]. 6. DC; DD यदा for यद्वा. DB द्विजः for बुधः. VSP inserts इति after बुधः. 7. DA inserts अथ before वराहपुराणे. 10. SP, VSP नियमे विशेषः.

उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥
(भविष्यपुराण ४.५५.२३)

तथा

असत्यभाषणं द्यूतं दिवास्वापं च मैथुनम् ।
एकादश्यां न कुर्वीत उपवासपरो नरः ॥

पतितपापण्डसंभाषणानृतस्तेयादिकं वर्जयेत्

इत्यादि स्मृत्युक्तमप्यनुसरणीयम् । तथा

ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनम् ।
व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चयः ॥

आमिषवर्जनं पारणादिन इति मदनपारिजातः । एतत् काम्योपवासे आवश्यकम् । आवश्यके निषेधस्तु

1. DC, DD, SP उपावृत्तस्तु. 2. DA तु for सः. DA सर्वतो भोगवर्जितः. VSP inserts इति after -विवर्जितः. 4. SP दिवास्वप्नं. 6. [Ascribed to Hārīta in Vv, p. 10]. DB (after correction from सेर्ष्यादिकं) -पेयादिकं for -स्तेयादिकं. 7. DA स्मृत्युक्तमपि ज्ञेयम्, DC, DD स्मृत्युक्तोन्यन्नसरणीयः (?), AS, SP स्मृत्युक्तोऽप्यनुसरणीयः, VSP स्मृत्युक्तोऽनुसरणीयः for स्मृत्युक्तमप्यनुसरणीयम्. 8. DB मद्यमामिषवर्जितम् for सत्यमामिषवर्जनम्. 9. DB सर्वाणि for चत्वारि. 10. DC, DD insert च after एतत्. 10-11. VSP omits 'आवश्यकम् । आवश्यके निषेधस्तु'. 11. DB, DC, DD, AS, SP आवश्यकनिषेधस्तु.

असकृज्जलपानाच्च सकृत्ताम्बूलभक्षणात् ।
उपवासः प्रणश्येत्तु दिवास्वप्नाच्च मैथुनात् ॥

इत्यादिः ॥

## अथ द्वादशीनियमाः ॥

भारते

सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे ।
उपवासफलं प्रेप्सोर्वर्ज्यं भक्तचतुष्टयम् ॥
दिवानिद्रां परान्नं च पुनर्भोजनमैथुने ।
क्षौद्रं कांस्यामिषं तैलं द्वादश्यामष्ट वर्जयेत् ॥
कांस्यं मांसं मसूरं च चणकं कोरदूषकम् ।
शाकं मधु परान्नं च त्यजेदुपवसन् स्त्रियम् ॥

1. DB, DC, DD, SP, VSP तु for च. [For the reading च see Kv, p. 452, A-com., p. 199, Sc IV, p. 60, Garuḍa-p. I. 128. 7, and so on]. 2. DA, DB दिवास्वप्नात्तु मैथुनात्, DC, DD, AS, VSP दिवास्वापाच्च मैथुनात्, SP दिवास्वप्नाक्षमैथुनात्. [दिवास्वप्नाच्च मैथुनात् occurs in Kv, p. 452 and Np, p. 469; दिवास्वापाच्च मैथुनात् in A-com., p. 199 and Sc IV, p. 61; दिवास्वप्नाक्षमैथुनैः in Ds, p. 59, Vv, p. 10 and Vk, pp. 63 and 67; दिवास्वप्नाक्षमैथुनात् in Garuḍa-p. I. 128. 7]. 3. DB omits इत्यादिः. DC, DD इति, AS, SP, VSP इत्यादि for इत्यादिः. 4. DB -नियमः. 7. DB, DD, AS, VSP भुक्त- for भक्त-. 8. DA दिवास्वापं for दिवानिद्रां. DB, DC, DD, AS -मैथुनम्. [Sc IV, p. 62 and Kn, p. 264 read -मैथुने, whereas Vk, p. 62 reads -मैथुनम्]. 10. DA मासं, DB, AS, VSP माषं for मांसं. [For the reading मांसं see A-com., p. 207, Sc IV, p. 61, Kn, p. 264, St I, p. 110 and II, pp. 55 and 78, and so on. The reading माषं occurs in Kv, p. 451, Vk, p. 62, Garuḍa-p. I. 128. 5, etc.]. DA, DC, DD कोरदूषणम्.

अत्र चोक्तनियमानामन्यतमलोपे तदुत्पन्नपापप्रशमनाय इमं मन्त्रं जपेत्—

शरीरमन्तःकरणोपजातं
बाह्यं च विष्णुर्भगवानशेषः ।
शमं नयत्वस्तु ममेह शर्म
पापादनन्ते हृदि संनिविष्टे ॥

ततः षोडशभिरुपचारैर्विष्णु संपूज्य संभवे हुत्वा ब्राह्मणान् वैष्णवांश्च भोजयित्वा

ॐ अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ।
प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ॥

इत्यनेन व्रतं निवेद्य पारणं कुर्यात् । पाश्चात्यास्तूपवासरूपस्य व्रतस्य पारणयैव समाप्तेः सायंभोजनादेरनिषिद्धत्वाद्वचनमिदमनाकरम्,

पार तीर समाप्तौ ( सिद्धान्तकौमुदी, पृः २३७ )

1. DB अन्यतरलोपे. SP inserts तु after -लोपे. DA -शमनाय, AS, SP प्रशमाय for -प्रशमनाय. 2. SP inserts ॐ before शरीर-. DA, VSP शारीर-. 3. DC अशेषम्, VSP अयं मे for अशेषः. 6. DB अतः for ततः. AS, SP, VSP insert च after ततः. DB षोडशोपचारै-. DB, DC, DD, SP, VSP insert च after हुत्वा. As inserts च after ब्राह्मणान्. DA, VSP place च before वैष्णवान्. 7. AS, VSP omit ॐ. 9. AS omits व्रतं. DB समर्प्य for निवेद्य. DD drops निवेद्य पारणं. DB, AS insert इति after कुर्यात्. DA पारणेनैव, DC, DD पारणायैव for पारणयैव. 10. DA समाप्तत्वात् for समाप्तेः. DA -निषिद्धत्वेन for -निषिद्धत्वात्. 11. DA, AS, VSP तीर पार समाप्तौ, DC, DD, SP पार तीर कर्मसमाप्तौ (SP has -कर्म- in the margin) for पार तीर समाप्तौ. [The Siddhānta-kaumudī has पार तीर कर्मसमाप्तौ].

इति धात्वर्थानुसाराद्व्रतसमापनस्यैव पारणापदार्थत्वात्; अत एव पारणान्तं व्रतमिति प्रसिद्धिः;

यथेष्टं च तथा रात्रौ पुनश्चैवं च सर्वदा

इति पुनर्भोजनानुवादश्च स्मर्यते; अतोऽनुपारणाया अप्यङ्गत्वात्तदभावे वैगुण्यापत्तेः पुनर्भोजनमावश्यकमित्याहुः। तन्न। पारणापदस्योपवासरूपाङ्गसमाप्त्यर्थकत्वेनाप्युपपत्तौ प्रधानविष्णुपूजाव्रतसमाप्त्यर्थत्वे मानाभावात्। पारणाया व्रतसमाप्त्यर्थकत्वेऽपि पुनर्भोजनवर्जनादीनामुदीच्याङ्गानां विधौ न बाधः। दक्षिणान्तश्राद्धसमाप्तौ पिण्डप्रतिपत्तिशेषभक्षणाद्युदीच्याङ्गवदिति। कथमन्यथा भवन्मतेऽप्यनुपारणाया अङ्गत्वेन विधिरुपपद्यतामिति।

यथेष्टं च

इत्यादि वचनं चामूलमेव। समूलत्वेऽपि न व्रतरूपोपवासपारणाविषयं किंतु निषेधरूपोपवासानन्तरपरदिनभोजनस्य निषेधाविषयत्वेनार्थप्राप्तयथेष्टपुनर्भोजनानुवादरूपमेव, लाघवादिति।

1. DB धात्वनुसारा-. DA पारणपदार्थत्वात्. 1-2. DA पारणान्तव्रतमिति. 2. DB प्रसिद्धः. 3. VSP तदा for तथा. AS पुण्यं for पुनः. DC, DD, SP चैव for चैवं DB तु for च. 4. After इति SP inserts पुनर्भोजनं च सर्वदा इति SP omits च. AS ततः for अतः. 5. DC, DD, AS, SP, VSP पुनर्भोजनाद्यावश्यक-. VSP omits तन्न. 5-6. DC, DD -समाप्त्यात्मकत्वेनाप्युपपत्तौ, VSP -समाप्त्यर्थत्वेनाप्युपपत्तौ. 6. SP inserts न before प्रधान-. DB -समाप्त्यर्थे, DC, DD -समाप्त्यात्मकत्वे. AS, SP -समाप्त्यर्थकत्वे for -समाप्त्यर्थत्वे. DC, DD -समाप्त्यात्मकत्वेऽपि, AS -समाप्त्यर्थेऽपि, VSP -समाप्त्यर्थत्वेऽपि. 7. DA पुनर्भोजनादीनामुदीच्या-. DB places न before विधौ. DB दक्षिणान्तं, DC, DD दक्षिणां तु for दक्षिणान्त-. 8. DA -भोजनाद्युदीच्या-, DB -भक्षणमुदीच्या-. 9. After इति VSP inserts 'तथा च तदेव तिष्ठतु इत्यत आह'. 11. VSP transposes वचनं and चामूलम्. DA तु for च. DA अमूलत्वमेव for अमूलमेव. DB, DC, AS omit न. 12. VSP निषेधस्वरूपो-. SP -वासान्तरं परदिने for -वासानन्तरपरदिन-. DB -भोजननिषेधा-, DC, DD, AS, SP, VSP -भोजने निषेधा- for -भोजनस्य निषेधा-. VSP -प्राप्ते यथेष्ट- for -प्राप्तयथेष्ट-. DC, DD -पुनर्भोजनमनुवाद-. 13. DB, DC, DD, AS, SP -रूपत्वमेव for -रूपमेव.

सायमाद्यन्तयोः

इत्यादीनां तु मदनपारिजातादिलिखितत्वेनामूलत्वाभावादिति। अत्र च पुत्रवतां गृहिणां शुक्लैकादश्यामेवोपवासाधिकारः,

एकादशीषु कृष्णासु रविसंक्रमणे तथा।
चन्द्रसूर्योपरागे च न कुर्यात्पुत्रवान् गृही॥
आदित्येऽहनि संक्रान्तावसितैकादशीदिने।
व्यतीपाते कृते श्राद्धे पुत्री नोपवसेद्गृही॥

तथा

इन्दुत्त्रयेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे।
उपवासं न कुर्वीत पुत्रदारधनक्षयात्॥
रविवारेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे।
पारणं चोपवासं च न कुर्यात्पुत्रवान् गृही॥

इति ब्रह्मपुराणादिवचनात्। गृहीतव्रतयोस्तु यतिवानप्रस्थयोः पुत्रिणोः, अपुत्रस्य गृहिणोऽपि कृष्णैकादश्यादावुपवासाधिकारः।

तथा च गोभिलः

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि।
वनस्थयतिधर्मोऽयं शुक्लामेव सदा गृही॥

2. DB, VSP -पारिजात- for -पारिजातादि-. SP -धृत- for -लिखित-. DA omits इति. 4. VSP शुक्लासु for कृष्णासु. 6. DA आदित्ये रविसंक्रान्ता-. 8. DB omits तथा. 9. DA असितैकादशीदिने for एकादश्यां सितेतरे. 10. DB -पौत्र- for -दार-. 12. DC पारणां. 13. DC, DD, SP -पुराणवचनात्. DD, AS, VSP गृहीतयोस्तु for गृहीतव्रतयोस्तु. 14. DA कृष्णैकादश्यु- (or -दश्यामप्यु-, the reading being indistinct) पवासेऽधिकारः, AS कृष्णैकादश्यादावप्युपवासाद्यधिकारः, SP कृष्णैकादश्यामुपवासाधिकारः. 15. DA गोतमः for गोभिलः. 16. DA inserts इति after अपि.

इति। ब्रह्मचारिणस्तु सामान्यकालेषु पुत्रवद्गृहिणो निषेधात्तदितरत्वेनाधिकारः। रविवारसंक्रान्त्यादावुपवासनिषेधस्तु तन्निमित्तोपवासपरः।

तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः।
नानुषङ्गकृतो ग्राह्यो यतो नित्यमुपोषणम्॥

इति स्मृतेः। एकादश्यां प्रत्युत रविवारादिसंबन्धे फलविशेषोऽपि स्मर्यते। यथा सनत्कुमारः

भानुवारेण संयुक्ता तथा संक्रान्तिसंयुता।
एकादशी सदोपोष्या सर्वसंपत्करी तिथिः॥

तथा विष्णुधर्मोत्तरे

भृगुभानुदिनोपेता सूर्यसंक्रान्तिसंयुता।
एकादशी सदोपोष्या पुत्रपौत्रविवर्धनी॥

रविवारादौ पारणानिषेधस्तु व्रतरूपोपवासविषयः, तत्रैव पारणापदार्थत्वात्।

कृष्णैकादश्यां तु शयनोत्थानमध्ये गृहस्थेनाप्युपवासः कर्तव्यः। तदुक्तं ब्रह्मवैवर्ते (४.२६.३६)

1. DC, DD ब्रह्मचारिणां तु. DC, AS, SP, VSP -वचनेषु for -कालेषु. VSP अधिकारात् for निषेधात्. DC, DD, SP तदितरत्वेऽधिकारः, AS तदितरेऽप्यधिकारः, VSP तदितरत्वे निषेधः for तदितरत्वेनाधिकारः. 2. DA रविसंक्रान्त्या-, DB, AS, SP रविवारे संक्रान्त्या-. 5. DC, DD श्रुतेः, SP वचनात् for स्मृतेः. VSP omits स्मृतेः. DC, DD, SP, VSP insert तु after एकादश्यां. DA -संबन्धेन. DB, SP, तथा for यथा 9. DA° omits तथा. 11. DD, AS, SP, VSP -विवर्धिनी. AS, SP insert इति after -विवर्धनी. 12. SP पारणनिषेधस्तु. DA तस्यैव for तत्रैव. DA, AS, SP पारणपदार्थत्वात्. DC, DD, AS, VSP insert इति after -पदार्थत्वात्. 13. DA, कृष्णैकादशी for कृष्णैकादश्यां. DA गृहिणाप्युपोष्या for गृहस्थेनाप्युवासः कर्तव्यः.

शयनीबोधनीमध्ये या कृष्णैकादशी भवेत् ।
सैवोपोष्या गृहस्थेन नान्या कृष्णा कदाचन ॥

इति । श्राद्धदिने तु विशेषो विष्णुधर्मोत्तरे

उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् ।
उपवासं तदा कुर्यादाघ्राय पितृसेवितम् ॥

इति । अशौचे तु मनसा भगवन्तं हरिं प्रणम्योपवसेत् ।

सूतके मृतके चैव प्रणम्य मनसा हरिम् ।
एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते ॥

तथा

बहुकालिकसंकल्पो गृहीतश्च पुरा यदि ।
मृतके सूतके चैव व्रतं तन्नैव दुष्यति ॥

तथा

सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम् ॥

इति । अशक्तौ तु

उपवासासमर्थस्तु किंचिद्भक्ष्यं प्रकल्पयेत् ॥

1. AS transposes या and कृष्णा. 2. DA न त्वन्या वै for नान्या कृष्णा 3. DA, VSP omit इति. 6. For the words from अशौचे तु to प्रणम्योपवसेत् VSP reads : अशौचे सति भगवन्तं विष्णुं मनसा ध्यात्वा प्रणम्योपवसेदिति. DB शिरसा for मनसा. DA omits हरिं. DC, AS, SP विष्णुं for हरिं. 7. DC, DD transpose सूतके and मृतके. DB शिरसा for मनसा. 8. DC, DD व्रतमेव. DB, VSP लुम्पति for लुप्यते, 9. DB omits तथा. 11. DC, DD, AS, SP, VSP transpose मृतके and सूतके. [ The reading मृतके सूतके चैव is found in St II, p. 86, whereas Kv, p. 449 reads सूतके मृतके चैव ]. DA नैव च for तन्नैव 13. DB transposes सूतके and मृतके. 14. DA omits इति. DB omits तु. 15. VSP inserts इति after प्रकल्पयेत्

तथा वराहपुराणे

उपवासनिषेधे तु किंचिद्भक्ष्यं प्रकल्पयेत् ।
उपवासो न दुष्येत्तु उपवासफलं लभेत् ॥

तथा

एकभक्तेन नक्तेन भक्षान् वृद्धातुरः क्षिपेत् ॥

तथा भक्ष्यप्रकारानाह वायुपुराणे

नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत्पञ्चगव्यं यदि वाथ वायुः
प्रशस्तमत्रोत्तरमुत्तरं च ॥

अत्यन्तासामर्थ्ये तु

असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्मपत्नीं वा पुत्रं वा विनयान्वितम् ।
भगिनीं भ्रातरं वापि व्रतमस्य न लुप्यते ॥

1-3. SP omits all words from तथा वराहपुराणे to उपवासफलं लभेत्. 1. VSP omits तथा. 3. VSP उपवासं for उपवासो. DA, DC, AS प्रदुष्येत्तु for न दुष्येत्तु. [For the reading उपवासो न दुष्येत्तु see Kv, p. 431. Instead of उपवासो न दुष्येत्तु St II, p. 39 reads उपवासो न दुष्येत, whereas A-com., p. 203, Sc IV, p. 76 and St II, p. 87 read न दुष्यत्युपवासेन, Vk, p. 55 reads उपवासो न सिध्येत, St I, p. 108 has न दुष्येदुपवासेन, and so on]. 5. VSP उपवासेन for एकभक्तेन. DC drops नक्तेन with the mark ˇ for the omission. 6. DA omits तथा. DC VSP भक्ष- for भक्ष्य-. DB, AS -प्रकरणमाह for -प्रकारानाह. VSP वराहपुराणे for वायुपुराणे. 7. DC, DD भविष्यान्न- for हविष्यान्न-. DC, DD, AS, SP च for वा. 8. DC, DD तिलाक्षीर- for तिलाः क्षीर-. 9. DB वा च वायुः, AS वा यवागूः for वाथ वायुः. 11. DB VSP अत्यन्तासमर्थे. 13. VSP च for वा (after धर्मपत्नीं).

भार्या भर्तुर्व्रतं कुर्याद्भार्यायाश्च पतिस्तथा।
असामर्थ्ये द्वयोस्ताभ्यां व्रतभङ्गो न जायते॥

एकभक्तादिना वर्तयन्नपि द्वादश्यां विष्णूपासनापूर्वकं पारणादिकं कर्तव्यमेव,

एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन दानेन नैवाद्वादशिको भवेत्॥

इति वचनात्। अत्र

व्रतभङ्गो न जायते

इत्यादिवचनश्रवणात् काम्येऽपि नानुकल्पदोषो वचनादिति केचित्। निषेधपक्षे तु न दशमीद्वादशीनियमाविति। अत्र चाखण्डायामेकादश्यामुपवासे संशय एव नास्ति। खण्डायां त्वेकादश्यां बह्वः प्रकाराः। तत्र यदि पूर्वदिने संपूर्णैकादशी परदिनेऽपि प्राप्यते, द्वादशी चापरदिने पारणायोग्या लभ्यते, तदा संपूर्णामेकादशीं त्यक्त्वा खण्डैकादशीयुक्तद्वादश्यामुपोष्यापरदिने प्रातर्द्वादश्यां विष्णुमुपास्य पारणां कुर्यात्।

1. DB, DC, DD, SP, VSP भर्तृव्रतं. [For the reading भर्तुर्व्रतं see Kv, p. 450. Instead of भार्या भर्तुर्व्रतं Kn, p. 262 reads भार्या पत्युर्व्रतं; Vk, pp. 58 and 69 read भर्तुर्भार्या व्रतं, St II, pp. 95 and 152 have भार्या भर्तृव्रतं, and so on]. DC, DD तु for च. 2. DB, SP insert इति after जायते. 3. VSP विष्णूपाषणपूर्वकं. AS, SP -पूर्वक- for -पूर्वकं. DB पारणादि, VSP पारणं (which is placed before विष्णूपासनापूर्वकं) for पारणादिकं. 5. DC, DD नैवाद्वादशीको. 8. DB, DC, DD, VSP इति for इत्यादि-. DC, DD, AS, SP, VSP -वचन-. DB, DC -दोषोऽवचनादिति. VSP omits तु. 9. DD omits न. DC, DD अथ for अत्र. 10. DB omits तु (before एकादश्यां). DA अत्र for तत्र. DB, DC, DD, AS, SP omit पूर्वदिने. SP omits अपि. DB, SP insert किंचित् after परदिनेऽपि. 11. DC (after correction from पारणायोग्या) पारणयोग्या. DB, DC, DD, AS, SP पूर्णमेकादशीं, VSP संपूर्णैकादशीं for संपूर्णामेकादशीं. 12. DC, DD -द्वादशीमुपोष्या-. DB, DC, DD, SP, VSP पारणं for पारणां.

पारणायोग्या चोक्ता नारदीये ( २.२.१५ )

कलाद्वयं त्रयं वापि द्वादशी तु यदा भवेत्।
पारणे मरणे वापि तिथिस्तात्कालिकी स्मृता ॥

तात्कालिकीति न तूपवासादिवत्तिथेः साकल्यमित्यर्थः। तथा

स्वल्पायामथ राजेन्द्र द्वादश्यामरुणोदये।
स्नानार्चनक्रियाः कार्या दानहोमादिसंयुताः ॥
( नारदीयपुराण २.२.२१ )

गरुडपुराणे

यदा स्वल्पा द्वादशी स्यादपकर्षस्ततो भवेत् ॥

स्कन्दनारदीयपुराणयोः

उदयात् प्राक् चतस्रस्तु नाडिका अरुणोदयः ॥

तथा कात्यायनः

संध्यादिकं भवेन्नित्यं पारणं तु निमित्ततः।
अद्भिस्तु पारयित्वाथ नैत्यिकान्ते भुजिर्भवेत् ॥

1 ff. AS, VSP omit all words from पारणायोग्या चोक्ता to इति (p. 122, line 4). [2. The line कलाद्वयं त्रयं वापि is not found in the Nāradīya-p.]. 4. DC कालिकीति for तात्कालिकीति. 5. DB अल्पायामथ. [For स्वल्पायामथ St II, p. 79 reads स्वल्पायामपि, whereas Kn, p. 272 has अल्पायामथ]. 7-8. DA omits all words from गरुडपुराणे to अपकर्षस्ततो भवेत्. 7. DB गारुडपुराणे. [8. The line यदा स्वल्पा द्वादशी etc. is not found in the Garuḍa-p.]. 9. DA स्कान्दे for the whole line. SP स्कन्दपुराण- for स्कन्द-. DC, DD -नारद- for -नारदीय-. [10. The line उदयात् प्राक् etc. is not found in the present Skanda-p.]. 11. DA omits तथा. 13. DC omits अथ. DB भुजिक्रिया for भुजिर्भवेत्. [In St II, p. 80 the reading is भुजिक्रिया, but in Kn, p. 272 it is भुजिर्भवेत् ].

देवलोऽपि

सङ्कटे विषमे प्राप्ते द्वादश्यां पारयेत् कथम् ।
अद्भिस्तु पारणं कुर्यात् पुनर्भुक्तं न दोषकृत् ॥

इति। अपरदिने द्वादश्यलाभे तु पूर्वैवोपोष्या, द्वादशीपारणानुरोधात्। तदुक्तं भृगुणा

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा ।
तत्रोपोष्या द्वितीया तु परतो द्वादशी यदि ॥

तथा प्रचेताः

पूर्णाप्येकादशी त्याज्या वर्धते द्वितयं यदि ।
द्वादश्यां पारणालाभे पूर्वैव परिगृह्यते ॥

द्वितयमेकादशीद्वादश्यौ न दशम्येकादश्यौ,

पूर्णाप्येकादशी

इत्युक्तेः। उत्तरदिने द्वादश्यनिर्गमे पूर्वैवोपोष्येति यदुक्तं तद्गृहिविषयम्। यत्यादिभिस्तु परोपोष्या। तदुक्तं कूर्मपुराणे

3. DB कृत्वा for कुर्यात्. [For the reading कुर्यात् see Kn, pp. 226 and 273 and St II, p. 100. In St II, p. 80 the reading is कृत्वा]. DA भक्तं for भुक्तं. [For भुक्तं St II, pp. 80 and 100 read नक्तं]. 4. SP omits इति. DB परदिने द्वादश्यभावे for अपरदिने द्वादश्यलाभे. DB द्वादश्यां पारणानुरोधात्. 7. For the entire line SP reads: तत्रोपवासं कुर्वीत परतो द्वादशी न चेत्. DA, DC, DD insert इति after द्वादशी यदि. 10. DC, DD, AS insert इति after परिगृह्यते. 11. VSP omits न दशम्येकादश्यौ. 12. DA omits अपि. 13. DA inserts तु after द्वादश्यनिर्गमे. 14. DA inserts तत्रापि after यत्यादिभिस्तु. AS कूर्मपुराणं.

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
उत्तरां तु यतिः कुर्यात् पूर्वामुपवसेद्गृही ॥
एकादशी प्रवृद्धा चेच्छुक्ले कृष्णे विशेषतः।
तत्रोत्तरां यतिः कुर्यात् पूर्वामुपवसेद्गृही ॥

एकादश्येव विशेषतो वृद्धा परदिने निर्गता, न दशमी नापि द्वादशीत्यर्थः। एवं च

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम् ॥

( बृहन्नारदीयपुराण २७.४८ ) इत्यादीनां समूलत्वेऽप्येतद्विषयत्वं ज्ञेयम्। तथा विष्णुधर्मोत्तरे

संपूर्णैकादशी यत्र प्रभाते पुनरेव सा।
लुप्यते द्वादशी तस्मिन्नुपवासः कथं भवेत् ॥
उपोष्ये द्वे तिथी तत्र विष्णुप्रीणनतत्परैः ॥

4. For the line तत्रोत्तरां etc. DA, DC, DD, AS, VSP read तत्रोत्तरामित्यादि समानम्. After उपवसेद्गृही DB inserts इति समानम् and SP inserts इति. 5. DA एकादश्यैव. DB inserts यदि after परदिने. VSP विनिर्गता for निर्गता. AS omits न (after निर्गता). DB omits दशमी. DA न, DB च for नापि. After द्वादशीत्यर्थः DB, DC, DD, SP, VSP insert: "तथा माधवीयसंग्रहे (कालनिर्णय, पृः २४९) गरुडपुराणे (DB गारुडपुराणे, SP गरुडपुराणम्)

पुनः प्रभातसमये घटिकैका यदा भवेत्।
तत्रोपवासो विहितो वनस्थस्य यतेस्तथा।
विधवायाश्च तत्रैव परतो द्वादशी न चेत् ॥ इति।"

6. AS शुक्ले कृष्णे विशेषतः for रात्रिशेषे त्रयोदशी. 7. DA द्वादशीं for द्वादशीः. 8. DA, VSP omit अपि. For °एतद्विषयत्वं DB, DC, DD, SP read एतद्विषयं, whereas VSP has द्वादश्यनिर्गमविषयं गृहिविषयं वा. DB तथाहि for तथा. 11. DC, DD यस्मिन् for तस्मिन्. 12. DA, DC, DD यत्र for तत्र. [For the reading तत्र see Sc IV, p. 66, Kn, p. 248, St II, p. 41, and so on].

द्वे तिथी पूर्वा परा चाधिकारिभेदादित्यर्थः। यदा पूर्वदिने दशमी परदिने चैकादशी स्वल्पा ततो द्वादशी रात्रिशेषे त्रयोदशीत्येवं द्वादशीक्षये त्रिस्पृशा, तदा सैव सर्वैरुपोष्या। यदुक्तम्

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्॥

इति। यत्तु

कला काष्ठा मुहूर्तं वा यदि स्यान्नापरेऽहनि।
द्वादश द्वादशीर्हन्ति त्रयोदश्यां तु पारणम्॥

इति ब्रह्मवैवर्तवचनं तदेकादशीक्षये त्रिस्पृशायां त्रयोदश्यां द्वादश्यनिर्गमविषयं वक्ष्यमाणवचनात्, नोक्तविषयमुक्तवचनविरोधात्। यदाह मत्स्यपुराणम्

विद्धाप्येकादशी ग्राह्या परतो द्वादशी न चेत्॥

कूर्मपुराणेऽपि

1. DB, DC insert तत्र after तिथी. DA, DC, DD पूर्वापराधिकारि-, DB पूर्वापराद्याधिकारि-. VSP inserts तु after यदा. SP inserts विद्धा after दशमी. DB omits च. 2. VSP अल्पा for स्वल्पा. DB omits इति (after त्रयोदशी). 3. DB, VSP तदुक्तम् for यदुक्तम्. DC, DD insert कूर्मपुराणे after यदुक्तम्. 5. DC, DD, AS पारणे for पारणम्. 6. DA, DC, DD omit इति. 7. DA, DC, DD, AS, VSP कलां काष्ठां for कला काष्ठा. [For the reading कला काष्ठा see Acom., p. 204, Sc IV, p. 80, Vk, p. 52, and so on], DB, DD, VSP मुहूर्तोऽपि for मुहूर्तं वा. SP यदि न स्यात्परेऽहनि for यदि स्यान्नापरेऽहनि. 9. DB -क्षयत्रिस्पृशायां for -क्षये त्रिस्पृशायां. 9-10. Instead of the words from द्वादश्यनिर्गमविषयं to नोक्तविषयम् DA reads द्वादश्यविनिर्गमविधिनोक्तविषयम् and SP has द्वादश्यनिर्गमविषयं वक्ष्यमाणवचनमप्येतद्विषयम्. 10. DC, DD, AS, VSP insert इति after -विरोधात्. 10ff. DD haplologically omits all words from यदाह मत्स्यपुराणम् to सदा तिथिः (p. 125, line 5). 11. VSP त्याज्या for ग्राह्या. [The line विद्धाप्येकादशी, which is not found in the present Matsya-p., is the same as Nāradīya-p. I. 29. 47a]. 12. DB omits अपि.

मुहूर्तं द्वादशी न स्यात्त्रयोदश्यां यदा मुने।
उपोष्या दशमीविद्धा सर्वैरेकादशी तदा॥

तथा नारदीयपुराणे

त्रयोदश्यां यदा न स्याद्द्वादशी घटिकाद्वयम्।
दशम्यैकादशी मिश्रा सैवोपोष्या सदा तिथिः॥

यदा च दशमीविद्धैकादशी द्वादश्यां न निःसरति त्रयोदश्यामपि द्वादश्यल्पा निर्याति तदा मुमुक्षुभिः शुद्धा द्वादश्युपोष्या, सकामैस्तु तदापि दशमीविद्धैवोपोष्या।

शुद्धैव द्वादशी राजन्नुपोष्या मोक्षकाङ्क्षिभिः॥

तथा

निष्कामस्तु गृही कुर्यादुत्तरैकादशीं सदा।
सकामस्तु सदा पूर्वामिति बौधायनोऽब्रवीत्॥

इति विष्णुरहस्यवचनात्। यत्तु

एकादशी दशाविद्धा शुद्धैव द्वादशी परा।
द्वादशीं समुपोष्यैव त्रयोदश्यां तु पारणम्॥

2. DB सदा for तदा. 3. DA, DC तदा for तथा. DA नारदीये for नारदीयपुराणे. AS, SP, VSP insert अपि after -पुराणे. 5. DB दशम्येकादशीविद्धा, DC, AS, SP, VSP दशम्येकादशीमिश्रा for दशम्यैकादशी मिश्रा [For the reading दशम्यैकादशी मिश्रा see Acom., p. 207. In Kn, p. 254, Sc IV, p. 70, Vk, p. 54, St I, p. 107 and II, p. 46, etc. the reading is दशम्यैकादशी विद्धा]. DB, DC, AS, SP insert इति after तिथिः. 6. DB, VSP तु for च DA तु for अपि. DC, DD, SP, VSP स्वल्पा for अल्पा. DC, DD, VSP insert न after अल्पा. 7. DA inserts भवति after उपोष्या. VSP उपास्या for उपोष्या (after दशमीविद्धैव). 8. DB, DC, DD मुक्ति- for मोक्ष-. 9. AS omits तथा. 12. DA omits यत्तु. 14. DC, DD द्वादशी for द्वादशीं.

इत्यादि वचनजातं तदनाकरमेव। साकरत्वेऽप्युक्तवचनविरोधात्त्रयोदश्यां त्रयोदशीदिने द्वादशीक्षणे पारणमिति व्याख्येयमिति। एवं च

दशम्यैकादशी विद्धा गान्धारी तामुपोषिता।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत्॥
मुहूर्तेनापि संयुक्ता दशम्यैकादशी च या।
तामुपोष्य नरो राजन् सुखाद्धर्माच्च हीयते॥
यैः कृता दशमीविद्धा जडवाक्यात्तु मानवैः।
ते गता नरकं घोरं युगान्येकोनविंशतिम्॥
ये कारयन्ति कुर्वन्ति दशम्यैकादशीं युताम्।
आलोक्य तन्मुखं ब्रह्मन् सूर्यदर्शनमाचरेत्॥

इत्यादीनि यानि दशमीवेधनिन्दाबोधकानि वचनानि तानि सर्वाणि निष्कामस्य त्रयोदशीदिने द्वादशीनिर्गमविषयाणि द्वादशीदिने एकादशीनिर्गमविषयाणि च ज्ञेयानि। इयं च सर्वदेशसिद्धा व्यवस्था प्रामाणिकी ग्राह्या।

1. DB, VSP वचनं for वचनजातं. DB, AS, VSP omit एव. DA उक्तविरोधात्, SP उक्तयुक्त्या वचनविरोधात् for उक्तवचनविरोधात्. 2. After पारणमिति DB inserts विष्णुरहस्यवचनात्. AS, VSP omit इति ( after व्याख्येयम् ). 3. DB, DC, DD, SP, VSP दशम्येकादशीविद्धा. [ For the reading दशम्यैकादशी विद्धा see Kv, p. 441, St I, p. 107 and II, p. 54, and so on. Vk, p. 43 reads दशम्यैकादशी मिश्रा, whereas Acom., p. 205, Sc IV, p. 70, and Np, p. 475 have दशमीशेषसंयुक्ता]. DB गान्धार्य्या समुपोषिता. DB, DC, DD दशम्येकादशी. 6. DB, DC, DD, VSP तु for च. 9. DA, DC, DD, VSP दशम्येकादशीयुताम्. [For the reading दशम्यैकादशीं युताम् see Vk, p. 50, St I, p. 107 and II, p. 54, and so on]. 10. DA आरभेत् for आचरेत्. 11. DB, AS, VSP इत्यादिदशमीवेधे निन्दा-, DC, DD इत्यादिदशमीवेधनिन्दा-, SP इत्यादिदशमीविद्धानिन्दा-. DB, AS, VSP वाक्यानि for वचनानि. 12. DB, DC, DD, AS, SP, VSP त्रयोदश्यां for त्रयोदशीदिने. DC, DD insert सर्वेषामेव after द्वादशीनिर्गविषयाणि. 13. DC, DD omit च (before सर्वदेशसिद्धा). DB transposes सर्वदेशसिद्धा and व्यवस्था. DA transposes व्यवस्था and प्रामाणिकी. DA omits ग्राह्या.

यत्तु गौडसंवत्सरप्रदीपादौ सूर्योदयात् प्राग्दशमीयोगे दशमीविद्धोपवासविषयाणि वचनान्युदयानन्तरवेधे तु शुद्धद्वादश्युपवासविषयाणि

कुर्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनीम्।
उपोष्या द्वादशी तत्र त्रयोदश्यां तु पारणम्॥
उदयात्प्राग्दशम्यास्तु शेषः संयोग इष्यते।
उपरिष्टात्प्रवेशस्तु तस्मात्तां परिवर्जयेत्॥

इत्यादिसौरधर्मोत्तरवचनादिति निर्णीतं (संवत्सरप्रदीप, पः ३६ क) तन्नान्यत्र क्वापि दृष्टम्। गौडा एव स्मृतिमहार्णवे भोजदेवेन लिखितमिति वदन्ति। देशान्तरे स्मृतिमहार्णवेऽपि नैतद्वचनं दृश्यते। तेन संदिग्धमूलमिदम्। समूलत्वेऽप्यलाभे त्रयोदश्यां द्वादश्यलाभे संयुक्तां सूर्योदयात्प्राग्वक्त्रावलोकनसमये दशम्या युक्तां षष्टिदण्डात्मिकामेकादशीं कुर्यादित्यर्थः।

द्वादश्यां पारणालाभे पूर्णैव परिगृह्यते

इति प्रचेतोवचनैकवाक्यत्वादिति भावः। लाभे तु संयुक्ता न ग्राह्या,

पूर्णाप्येकादशी त्याज्या

1. DB दशमीविद्धैकादशी- for दशमीविद्धोपवास-. DC, DD, SP, VSP -विषयकाणि for -विषयाणि. DB inserts च after -विषयाणि. 2. DC, DD, AS, SP, VSP -विषयकाणि for -विषयाणि. DA inserts च after -विषयाणि 4. DB, DC, DD, VSP insert इति after पारणम्. 5. DB दशम्यां तु for दशम्यास्तु. DC, DD, SP उच्यते for इष्यते. [6. In our Ms of the Saṃvatsara-pradīpa the verses 'कुर्यादलाभे' etc. are ascribed to the Kūrma-p.]. 8. DA गौडीयाः, DC, DD, केवलगौडाः, AS, SP, VSP केवलं गौडाः for गौडाः. DA inserts इदम् after लिखितम्. 9. DB, SP, VSP देशान्तरस्मृतिमहार्णवे-. SP omits अपि. 10. DB रक्तालोकन-, DD शुभावलोकन- for वक्त्रावलोकन-. 11. DA इत्यन्वयः for इत्यर्थः. DC, DD omit इत्यर्थः. [For इत्यर्थः see St II, p. 47]. 13. DA -वाक्यतयेति भावः.

इत्यनेनैकश्रुतिमूलत्वादिति। अलाभ इति विशेषणस्वरसः। नालाभेऽपीति द्वादश्यात्रयोदश्यामनिर्गमेऽपीत्यर्थः। यत्र दशमी सूर्योदयात्परतः परदिने चैकादशी द्वादशी रात्रिशेषे त्रयोदशी चेति त्रिस्पृशा तत्र दशमीविद्धैकादशीनिषेधविषयमिदम्। अयमाशयः—

एकादश्यां प्रकुर्वन्ति उपवासं मनीषिणः।
उपासनाय द्वादश्यां विष्णोर्यद्बदियं तथा॥

इति भविष्यपुराणवचनात्परदिने द्वादश्यां विष्णूपासनार्थत्वमेकादश्युपवासस्यावगतम्। तच्चोक्तविषये दशमीविद्धैकादश्युपवासमन्तरेण न संभवतीति सोऽप्यस्त्वित्याशङ्क्योक्तम्

उपोष्या द्वादशी तत्र

इति। त्रयोदश्यामिति न तु द्वादश्यां विष्णुपूजां कृत्वा,

एकादशी द्वादशी च रात्रिशेषे त्रयोदशी।
तत्र क्रतुशतं पुण्यं त्रयोदश्यां तु पारणम्॥

इति वचनात्। न चैकादश्याः परदिने द्वादशीसंबन्धे

द्वादशीं समुपोष्य

इत्यसंगतम्, एकादशीयुक्तद्वादश्या अपि द्वादशीत्वात्ततः।

1. VSP विशेषवचन- for विशेषण-. SP -स्वरसात् for -स्वरसः. 2. VSP transposes यत्र दशमी and सूर्योदयात् परतः. DB अत्र for यत्र. DD omits परतः. DA तु for च (after परदिने). DB omits च. DB inserts च after द्वादशी. 3. DA omits च (after त्रयोदशी). DC, DD, SP त्रिस्पृशात्. DB द्वादशी for तत्र. 6. DC, DD विष्णोर्यद्‌यदियं. 7. DC, DD विष्णूपासनार्थत्वे एकादश्यु-. DC, DD अवगतः for अवगतम्. 8. DC, DD एतच्चोक्त- for तच्चोक्त-. DA, DD, AS, SP -मन्तरेणासंभवतीति सो-. 10. AS inserts तत्र before त्रयोदश्यामिति. DC, DD, AS place all words from त्रयोदश्यामिति to विष्णुपूजां कृत्वा after वचनात् in line 13. AS omits विष्णु-. SP -पूजनं for -पूजां. DB, AS, VSP insert इति after वचनात्. 14. VSP द्वादश्यां. SP उपोष्य. 15. AS एकादश्या युक्त-. DB -द्वादश्यामपि.

अतएव

एकादशी दशायुक्ता शुद्धैव द्वादशी परा

इत्यादौ शुद्धेति विशेषणमर्थवत्। गौडास्तु पुत्रनाशादिगुरुतरदोषशङ्कामात्रेण दशमी-विद्धामात्रमेव परिहरन्तीत्यास्तां विस्तरः॥

## अथ विद्धैकादशीव्यवस्थोपसंहारः॥

यत्र षष्टिदण्डात्मिकैकादशी द्वादश्यां निःसरति, त्रयोदश्यामपि मुहूर्तमात्रं ततोऽल्पं वा पारणायोग्या द्वादशी लभ्यते, तदा परदिन एव सर्वेषामुपवासः। यदि तु त्रयोदशीदिने द्वादशी न पारणायोग्या तदा पूर्णायामुपोष्य परदिने द्वादश्यां पारणा गृहिभिः कार्या, यतिभिस्तु तत्रापि परैवोपोष्या। यदा पूर्वदिने दशमीमिश्रा परदिने त्वेकादशी द्वादशी रात्रिशेषे च त्रयोदशी तदा गृहिभिर्यतिभिश्च तामेवोपोष्य त्रयोदश्यां पारणा कार्या। यदि त्वेकादशी दशमीयुक्ता परदिने न निःसरति,

3. DA, DC, DD, AS, VSP शुद्धविशेषण-, DB शुद्धाविशेषण-. After अर्थवत् DA, DC, DD insert: यद्वा, उपोष्या एव इत्येवकारनिषेधस्य (DC, DD -कारेण निषेधस्य for -कारनिषेधस्य) विष्णूपासनस्य द्वादश्यैव संबन्धादेकादश्यामित्यभिहितमिति (DC, DD अभिधानमिति for अभिहितमिति) न क्वा-(DC-DD का-) प्यनुपपत्तिः. DA गौडीयास्तु. 4. DA -विद्धामेव परि-. 5. DA तदयं for अथ. DB अथ दशमीविद्धैकादशी-. DA -व्यवस्थायामुपसंहारः. 6. DC, DD तत्र for यत्र 7. DB पारणायोग्यद्वादशी. DB transposes सर्वेषाम् and उपवासः. AS omits तु. 8. DB पूर्णां तामुपोष्य, VSP पूर्णामुपोष्य. AS पारणादिने for परदिने. DB, AS, SP, VSP transpose परदिने and द्वादश्यां. 8-9. DA transposes पारणा and गृहिभिः. 9. SP omits तत्रापि. DA, AS परैरुपोष्या. DB, VSP insert तु after यदा. 10. VSP omits तु (before एकादशी). DB transposes रात्रिशेषे and च. DA, VSP omit च. VSP omits यतिभिश्च. DC, DD उत्तरामेव for तामेव. After उपोष्य DB inserts परदिने. 11. SP यदा for यदि. DC, DD दशमीसंयुक्ता.

१७

द्वादश्यपि परदिने त्रयोदश्यां न निर्याति, तदा दशमीविद्धैव सर्वैरुपोष्या। यदा तूक्तविषये त्रयोदश्यां द्वादशी कियन्मात्राप्यस्ति तदा निष्कामैः शुद्धा द्वादश्युपोष्या, सकामैस्तु दशमीविद्धैव। यदा त्वेकादशी पूर्वापरदिनयोर्दशमीद्वादशीविद्धा तदा द्वादशीविद्धैव इति।

यत्तु

अविद्धानामलाभे तु पयोदधिफलानि च।
सकृदेवाल्पमश्नीयादुपवासस्ततो भवेत्॥

इति वचनं तदेकादशीव्यतिरिक्तविषयम्,

अविद्धानि निषिद्धैश्चेन्न लभ्यन्ते दिनानि तु।
मुहूर्तैः पञ्चभिर्विद्धा ग्राह्यैवैकादशी तिथिः॥

इति वचनादिति मदनपारिजातः। अत्र मुहूर्तपदं दण्डपरमिति॥

द्वादशी त्वेकादशीयुतैव ग्राह्या, निरपवादयुग्मवचनात्। श्रवणद्वादश्यां त्वेकादशीयुक्तायामुपवासे तत्रैव द्वयमविरुद्धं स्यात्। एकादश्याः पूर्णत्वेन परदिने

1. VSP तदा for यदा. 2. DB omits अपि (after कियन्मात्रा). 2-3. Instead of the words from कियन्मात्राप्यस्ति to दशमीविद्धैव DA reads: स्वल्पापि पारणायोग्या निःसरति तदा सकामैः पूर्वा दशमीविद्धोपोष्या, निष्कामैर्यतिभिश्च उत्तरा शुद्धा द्वादशी उपोष्या. 4. DA ग्राह्या for इति. DC, DD omit इति. 6. DB, DC -घृतानि for -फलानि. 8. DA omits वचनं. 9. DA अविद्धा न (?), AS अविद्धायाः for अविद्धानि. DA, DC, DD, AS, SP निषेधै- for निषिद्धै-. [The reading निषिद्धै- is found in Kn, p. 256]. DB omits न. 10. DA मुहूर्तपञ्चभि-. 11. SP omits वचनात्. DC, DD, AS, SP transpose इति (after वचनात्) and मदनपारिजातः. VSP inserts इति after मदनपारिजातः. DA, VSP omit अत्र मुहूर्तपदं दण्डपरमिति.. DC, DD, AS omit अत्र. 12. DC, DD omit तु (after द्वादशी). SP -युक्तैव. DC, DD निर्विवाद- for निरपवाद-. 13. DA -युतायाम् for -युक्तायाम्. DA द्वयमवरुद्धं, AS द्वयमर्थवत्, SP, VSP द्वयमनुरुद्धं for द्वयमविरुद्धं. AS inserts एव after परदिने.

श्रवणद्वादशीप्राप्तावुपवासद्वयमेव। तदुक्तं ब्रह्मवैवर्ते

एकादशीमुपोष्यैव द्वादशीं समुपोषयेत्।
न चात्र विधिलोपः स्यादुभयोर्देवता हरिः॥

इति।

असमाप्ते व्रते पूर्वे नैव कुर्याद्व्रतान्तरम्

इति वचनात् पारणाभावात् पूर्वोपवासासमाप्तावुपवासान्तरारम्भे विधिलोपो न भवेदित्यत्र हेतुमाह

उभयोः

इत्यादि। उपवासद्वयासमर्थेन तु श्रवणद्वादश्येवोपोष्या। तदुक्तम्

एवमेकादशीं भुक्त्वा द्वादशीं समुपोषयेत्।
पूर्वोपवासजं पुण्यं सर्वं प्राप्नोत्यसंशयम्॥

इति। तथा

उपोष्य द्वादशीं पुण्यां विष्णुऋक्षेण संयुताम्।
एकादश्युद्भवं पुण्यं नरः प्राप्नोत्यसंशयम्॥

[2-3. This verse is almost the same as Bhaviṣya-p. IV. 76. 66]. 4. DA, VSP omit इति 6. DA पारणाभावे. DA omits न. 6-7. DC, DD, AS, SP, VSP भवेदित्यर्थः for भवेदित्यत्र. 9. VSP -द्वयासामर्थ्ये श्रवण-. 10. DC, DD, SP, VSP वरमेकादशीं for एवमेकादशीं. [The reading वरमेकादशीं is found in St I, p. 115, whereas Acom., p. 210 and Kn, p. 266 read एवमेकादशीं]. 11. DB सर्वमाप्नोत्य-. 12. DC, DD omit तथा. 13. DA, DC, DD विष्णोर्ऋक्षेण, DB विष्णुर्ऋक्षेण. [For the reading विष्णुऋक्षेण see Acom., p. 210, St. I, p. 115, etc.]. 14. DB, AS एकादशीभवं. [St. I, p. 115 reads एकादश्युद्भवं]. VSP सर्वं for नरः. DB inserts इति after प्राप्नोत्यसंशयम्.

यदा त्वेकादश्यामेव श्रवणनक्षत्रं पतति तदा तत्रैव श्रवणद्वादशीव्रतं कार्यम्। तदुक्तं नारदेन

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः।
तास्वेव तद्व्रतं कार्यं श्रवणद्वादशीं विना॥

इति। तथा भविष्योत्तरे

एकादशी यदा तु स्याच्छ्रवणेन समन्विता।
विजया सा तिथिः प्रोक्ता भक्तानां विजयप्रदा॥
तिथिनक्षत्रसंयोगे उपवासो यदा भवेत्।
तावदेव न भोक्तव्यं यावन्नैकस्य संक्षयः॥
विशेषेण महीपाल श्रवणं वर्धते यदि।
तिथिक्षयेण भोक्तव्यं द्वादशीं नैव लङ्घयेत्॥

किंतु श्रवणैकादश्यां वामनावतारो विष्णुः, श्रवणद्वादश्यां तु जनार्दनसंज्ञकोऽभ्यर्च्यत इति॥

शुक्लपक्षे त्रयोदशी तु पूर्वविद्धोपोष्या,

1. DB पतेत् for पतति. VSP श्रवणे द्वादशी- for श्रवणद्वादशी-. 3. DA transposes प्रोक्ताः and पुण्याः. 4. VSP कुर्यात् for कार्यं. 5. DB omits इति. After इति SP inserts : अत्र तास्वेवेति नियमादन्यत्र कार्यमिति नियमः, श्रवणद्वादश्यां तु नियमो नास्ति, श्रवणैकादश्यामपि कार्यम्. DA भविष्ये for भविष्योत्तरे. DC, DD, AS, SP, VSP insert अपि after भविष्योत्तरे. 8. DB, DC, DD -योगे च for -संयोगे. 9. DA, DB, DC, DD, AS, VSP यावदेकस्य [For the reading यावन्नैकस्य see Kn, p. 227, Vv, p. 15, St I, p. 114, and so on]. 10. DA वर्धयेत् for वर्धते. 11. After लङ्घयेत् SP inserts : "एकादशी श्रवणयुक्ता परदिने श्रवणा दण्डचतुष्टयात्मिका द्वादशी च दण्डचतुष्टयात्मिका तत्र किं कार्यमित्याह तिथिक्षय इत्यादि। तिथिक्षये द्वादशीक्षये। तिथिक्षये न भोक्तव्यम्। अत्र हेतुमाह द्वादशीं नैवेति।" 11-12. DC (after correction from -संज्ञकोऽभ्यर्च्यत इति) -संज्ञकोऽच्युत इति. 13. DA शुक्लपक्षत्रयोदशी : SP च for तु. DB पूर्वविद्धोपास्या, DC पूर्वविद्धैवोपोष्या.

त्रयोदशी प्रकर्तव्या द्वादशीसहिता मुने।
भूतविद्धा न कर्तव्या दर्शपूर्णाः कदाचन ॥

इति ब्रह्मवैवर्तवचनात्। कृष्णत्रयोदशी तु परविद्धैवोपवासादौ ग्राह्या। यदाह

षष्ठ्यष्टम्यप्यमावास्या कृष्णपक्षे त्रयोदशी।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः ॥

शुक्लपक्षे चतुर्दशी परयुता ग्राह्या, युग्मवचनात्,

शुक्लपक्षेऽष्टमी चैव शुक्लपक्षे चतुर्दशी।
पूर्वविद्धा न कर्तव्या कर्तव्या परसंयुता ॥

इति स्मरणाच्च। कृष्णचतुर्दशी तु पूर्वविद्धैव कार्या,

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी।
पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित् ॥

इत्यापस्तम्बवचनात्। शिवरात्र्यादौ विशेषस्तत्र तत्रैव वक्तव्यः ॥

1. DC (after correction from प्रकर्तव्या) न कर्तव्या. 6. DA दशपूर्णा दर्शा (the word दश- being written on the margin). DB दशपूर्वा, DC, SP दशपूर्णा, DD, AS, VSP दशपूर्णा for दर्शपूर्णाः. [For the different readings for दर्शपूर्णाः see Sc IV, p. 47, Kn, pp. 277, 301, Vk, p. 28, and so on]. 3. After इति DC, DD, SP, VSP insert उपवासं प्रकृत्य. DC, DD कृष्णा त्रयोदशी. AS omits यदाह. 5. DB कार्याः, DC, DD पुण्याः, SP ग्राह्या for पूज्याः. DB inserts इति after संयुताः. 6. DA शुक्लपक्षचतुर्दशी. DB inserts एव after परयुता. DB. DD कार्या for ग्राह्या. Before युग्मवचनात् DA inserts चतुर्दश्याथ पूर्णिमा इति. 9. AS omits इति स्मरणाच्च. VSP वचनाच्च for स्मरणाच्च. DA omits तु. DB, SP च for तु. SP कर्तव्या for कार्या. 12. DB omits all words from शिवरात्र्यादौ to वक्तव्यः. AS inserts तु after शिवरात्र्यादौ. AS, SP, VSP omit तत्र (after विशेषः). DC, DD वक्ष्यते for वक्तव्यः.

पौर्णमासी चतुर्दशीयुतैव ग्राह्या,

चतुर्दश्याथ पूर्णिमा

इति युग्मवचतात्,

षष्ठ्येकादश्यमावास्या पूर्वविद्धा तथाष्टमी।
पूर्णिमा परविद्धा तु नोपोष्यं तिथिपञ्चकम्॥

इति ब्रह्मपुराणवचनाच्च। यत्तु विष्णुधर्मोत्तरीयमिति कृत्वा

एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी।
अमावास्या तृतीया च कर्तव्या परसंयुता॥

इति पठन्ति (कालनिर्णय, पृ: १६०, ३००) तदनाकरम्। साकरत्वेऽपि

पूर्वाह्णे मध्यमे वापि यदि पर्व समाप्यते।
तदोपवासः पूर्वेद्युस्तदहर्याग इष्यते॥

इति वचनात्,

द्वे ह वै पौर्णमास्यौ द्वे अमावास्ये तस्मात् प्रतिपद्युपवसन्नेव
यजेतापरेद्युः

इति श्रुतेश्च पौर्णमासयागविषयत्वं बोध्यमिति॥

अमावास्या तु प्रतिपद्युता ग्राह्या,

1. DA -युक्तैव. SP inserts युग्मवचनात् after ग्राह्या. 2. SP inserts तथा before चतुर्दश्याथ. 3. DA omits युग्म- and SP omits युग्मवचनात्. 6. DC, DD, SP च for तु. 10. DA, DC, DD पूर्व, AS, VSP पूर्वं for पर्व. 11. SP तत्रोपवासः. DC, DD उच्यते for इष्यते. 12. AS श्रवणात् for वचनात्. 13. DD inserts ह and SP ह वै before अमावास्ये. AS, VSP omit एव 15. DB, DC, DD, SP, VSP omit च (after) श्रुतेः. DC, DD पौर्णमासीयाग-. DB, VSP -विषयं for -विषयत्वं. DB बोद्धव्यम् for बोध्यम्. 16. DC, DD प्रतिपद्युक्ता. DB inserts एव after प्रतिपद्युता.

इति युग्मस्मृतेः,

षष्ठ्यष्टम्यप्यमावास्या कृष्णपक्षे त्रयोदशी।
एताः परयुताः पूज्याः पराः पूर्वेण संयुताः॥

इति शिवरहस्यवचनाच्च। पितृकर्मणि तु क्षीणा-स्तम्भिता-वर्धमाना-भेदेन व्यवस्था। यदाह छन्दोगपरिशिष्टं कात्यायनः

पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते।
वासरस्य तृतीयांशे नातिसंध्यासमीपतः॥
यदा चतुर्दशीयामं तुरीयमनुपूरयेत्।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते॥
यदुक्तं यदहस्त्वेव दर्शनं नैति चन्द्रमाः।
तत्क्षयापेक्षया ज्ञेयं क्षीणे राजनि चेत्यपि॥
यच्चोक्तं दृश्यमानेऽपि तच्चतुर्दश्यपेक्षया।
अमावास्यां प्रतीक्षेत तदन्ते वापि निर्वपेत्॥
(कात्यायनस्मृति १६.१-४)

तथा

संमिश्रा या चतुर्दश्या अमावास्या भवेत् क्वचित्।
खर्वितां तां विदुः केचिदुपेध्वमिति चापरे॥

1. DA प्रतिपदमावास्या. 2. SP omits युग्म-. DB, DC, DD -युग्मश्रुतेः, SP श्रुतेः, VSP वचनात् for -युग्मस्मृतेः. 4. SP ग्राह्याः for पूज्याः. DA मिश्रिताः for संयुताः. 5. SP omits च after -वचनात्. DB, VSP क्षीयमाणा- for क्षीणा-. 5-6. SP व्यवस्थामाह for 'व्यवस्था। यदाह'. 6. SP छन्दोगपरिशिष्टे for छन्दोगपरिशिष्टं DA has कात्यायनः in the margin. 9. DB, VSP तृतीय- for तुरीय-. 11-12. DC, DD, AS, VSP omit all words from यदुक्तं यदहस्त्वेव to राजनि चेत्यपि 11. DA यच्चोक्तं यदह-. 12. DA शस्यते for चेत्यपि. 15. DA यथा for तथा. 16. AS. VSP संमिश्रायाश्चतुर्दश्या अमा-.

वर्धमानाममावास्यां लक्षयेदपरेऽहनि ।
यामांस्त्रीनधिकान् वापि पितृयज्ञस्ततो भवेत् ॥

( कात्यायनस्मृति १६.९-१० ) इति । पिण्डान्वाहार्यकं पिण्डपितृयज्ञपिण्डानामनु पश्चादाह्रियमाणं साग्निक्रियमाणं दर्शश्राद्धं क्षीणे राजनि चन्द्रे शस्यते प्रशस्तं भवति । कालमाह—वासरस्य तृतीयांशे, वासरस्य दिनस्य त्रिधा विभक्तस्य तृतीयभागे । अतएव दर्शं प्रकृत्य श्रुतिः

पूर्वाह्णो वै देवानां मध्यंदिनं मनुष्याणामपराह्णः पितॄणाम्

इति ।

नातिसंध्यासमीपतः ( कात्यायनस्मृति १६.१ )

इत्युक्तेश्च अत्र दशममुहूर्तस्यापराह्णत्वेऽपि पिण्डपितृयज्ञार्थं तं विहाय तदूर्ध्वमुहूर्तद्वयस्य श्राद्धकालत्वमुक्तम् ।

नातिसंध्यासमीपतः ( कात्यायनस्मृति १६.१ )

इति संध्यासमीपो मुहूर्त एक आपद्यपि वर्जनीयः । एतेन निषिद्धमपि सायाह्न-

3. DA, VSP omit इति. DB inserts पिण्डानां and AS, VSP insert श्राद्धं after पिण्डान्वाहार्यकं. DB पितृयज्ञपिण्डानाम्, DC, DD, AS पिण्डपितृयज्ञानाम्, VSP पिण्डपितृयज्ञं पिण्डानाम् for पिण्डपितृयज्ञपिण्डानाम्. 4. AS ह्रियमाणं for आह्रियमाणं. DB omits साग्निक्रियमाणं. DA, DC, AS, SP साग्निह्रियमाण-, DD साग्निक्रियमाण- for साग्निक्रियमाणं. DA omits -दर्श-. DC inserts क्षीणे after राजनि. DA चान्द्रे for चन्द्रे. 5. DA inserts इति after तृतीयांशे. DB दिवसस्य for दिनस्य. AS, SP omit दिनस्य, AS omits त्रिधा विभक्तस्य. DB inserts च after विभक्तस्य. 6. DB, AS, VSP तृतीये भागे for तृतीयभागे. 7. DB transposes मध्यंदिनं मनुष्याणाम् and अपराह्णः पितणाम्. 10. AS, VSP omit च (after इत्युक्तेः). SP अतएव for अत्र. SP दश- for दशम-. AS अपराह्णे for अपराह्णत्वेऽपि. SP omits तं विहाय तदूर्ध्व-. DB, DC, DD तदूर्ध्वं मुहूर्त-. 13. AS आपत्स्वपि. DB inserts इत्यर्थः after वर्जनीयः. DB निषिद्धकालमपि. DB omits सायाह्न-.

मुहूर्तद्वयमापद्यनुज्ञातम्, अतिशब्दस्वरसात्। एतेन वासरस्य तृतीयांशेऽमावास्यायां मुख्यापराह्णे श्राद्धम्, तदभावे संध्यासमीपेतरसायाह्णे, उभयत्रैव चन्द्रक्षये प्राशस्त्यमित्युक्तम्। यदा तु परदिने श्राद्धयोग्यापराह्णप्राप्त्या दर्शद्वैधं तदा कथं श्राद्धमित्यत्राह

यदा चतुर्दशीयामम् (कात्यायनस्मृति १६.२)

इत्यादि। चतुर्दशीयाममिति चतुर्दश्यवच्छिन्नस्य दिनस्य तुरीयं यामं चतुर्थं प्रहरं यदामावास्या अनुपूरयेत् मुख्यापराह्णसंबन्धिनी भवतीति यावत् परदिने चामावास्या क्षीयमाणा वासरतृतीयांशव्यापित्वे सति पूर्वदिनवर्तिचतुर्दश्यपेक्षया क्षीयमाणा तदैव पूर्वदिन एव श्राद्धमिष्यते, परदिने पितृयज्ञश्राद्धयोग्यकालप्राप्तावपि चन्द्रक्षयानुरोधादिति भावः। यदि तु पूर्वदिने मुख्यापराह्णसंबन्धो नास्ति तदा पितृयज्ञानुरोधाच्चन्द्रक्षयाभावेऽपि परदिन एव श्राद्धम्। यदा तु परदिनेऽपि वासरतृतीयांशे श्राद्धयोग्यकालालाभस्तदा परदिने न श्राद्धम्। पूर्वदिनेऽप्यमावास्यायामपराह्णालाभान्न पिण्डपितृयज्ञ इति। दण्डापूपन्यायाच्छ्राद्धमपि नेति प्रसक्तौ

1. VSP omits -द्वय-. DB -मापद्यप्यनुज्ञातम्, AS -मापद्यभ्यनुज्ञातम्. DD inserts इति after -स्वरसात्. DB, SP, VSP वासरतृतीयांशे-. 1-2. DC, DD, VSP -मावास्याया मुख्यापराह्ण, AS -मावास्यायामपराह्ण. 3. DC, DD पूर्वदिने for परदिने. DA inserts अपि after परदिने. DB, AS दर्शश्राद्ध- for श्राद्ध-. 4. DC, DD, SP -मित्याह. 6. DA, SP इति for इत्यादि. DA, DC, DD, SP omit चतुर्दशीयाममिति. AS, SP, VSP चतुर्दश्यवच्छिन्नदिनस्य. DC, DD insert च after दिनस्य. DB, AS, SP, VSP omit यामं; DC, DD प्रहरं for यामं. 6-7. DA, DB, DC, DD, AS चतुर्थप्रहरं. 7. DB, DC, DD insert च after यदा. AS पूरयेत् for अनुपूरयेत्. VSP omits भवति. 8. DA, DC, DD वासरस्य तृतीयांश-. DB अपि for सति. 9. DA omits 'एव श्राद्धमिष्यते, परदिने'. DA पिण्डपितृयज्ञ- for पितृयज्ञ-. DB -श्राद्धकालाप्राप्तावपि. 10. DC, DD यदा for यदि. DA, VSP omit तु; DB पुनः for तु. DA inserts अपि after -संबन्धो. 11. DA (before marginal correction to श्राद्धम्). DB द्वयम्, SP पितृयज्ञः श्राद्धं च for श्राद्धम्. VSP omits तु. SP omits अपि (after परदिने). 12. DA वासरस्य तृतीयांशे. DA inserts अपि after -तृतीयांशे. DA न श्राद्धयोग्यकाललाभः, DB श्राद्धयोग्यकालाभावः for श्राद्धयोग्यकालालाभः. SP पूर्वदिने for परदिने न. 13. DB -लाभत्वे, AS -भावान्न for -लाभान्न. DC, DD पितृयज्ञमिति, AS, SP, VSP पितृयज्ञ इति for पिण्डपितृयज्ञ इति. DC, DD omit नेति.

नातिसंध्यासमीपतः ( कात्यायनस्मृति १६.१ )

इति प्रतिप्रसूतसायाह्न एव द्वयम्, चन्द्रक्षयानुरोधाद्दर्शद्वैधाभावेनाखण्डत्वाच्च। यदा तु पूर्वदिने सायाह्नेऽपि श्राद्धपिण्डपितृयज्ञयोरसंभवस्तत्राह

यच्चोक्तम् ( कात्यायनस्मृति १६.४ )

इति। गोभिलेन

यदहस्त्वेव चन्द्रमा न दृश्येत याममावास्यां कुर्वीत

( गोभिलगृह्यसूत्र १.५.४, १.५.८ ) इति सूत्रेणैतादृशपूर्वसूत्रपौनरुक्त्याददर्शनपदेन क्षयलक्षणया

सिनीवाल्याममावास्यायां पितृयज्ञादि कुर्यात्

इत्यभिधाय

दृश्यमानेऽप्येकदा ( गोभिलगृह्यसूत्र १.५.६)

इति यदुक्तं तत् सिनीवालीदिनवर्तिचतुर्दश्यपेक्षया। अतो न पौनरुक्त्यमिति भावः। तदा च विकल्प ऐच्छिकः स्यादित्यत आह

अमावास्याम् ( कात्यायनस्मृति १६.४ )

2. For प्रतिप्रसूतसायाह्न एव द्वयम् DB has only प्रतिप्रसूतसा DC, DD, SP श्राद्धम् for द्वयम्. 3. DA, DC, DD omit अपि (after सायाह्ने). DA has श्राद्ध- in the margin. DB पिण्डपितृयज्ञयोरसंभव-, DC नामावास्यापितृयज्ञयोरसंभव- (the syllables पितृयज्ञयोर- being written in the margin in different ink), DD नामावास्यासंभव-, AS, SP नामावास्या, VSP पितृयज्ञश्राद्धयोरसंभव- for श्राद्धपिण्डपितृयज्ञयोरसंभव-. 6. DD, AS (after correction from दृश्येत · दृश्यते. DA प्रकुर्वीत for कुर्वीत. 7. VSP omits -पूर्व-. DA -पौनरुक्त्यादर्शन-, DB, DC, DD, AS, SP -पौनरुक्त्यादर्शन-. 7-8. DB, DD -पदे लक्षणया, VSP -पदेन क्षयलक्षणा. 9. DB, SP श्राद्धादि, VSP पिण्डपितृयज्ञादि for पितृयज्ञादि. 12. DA पौनरुक्तमिति. 13. DC, DD, VSP यदा for तदा. AS चाचारकल्पः tor च विकल्पः. DA औतसिकः (?) for ऐच्छिकः. DA इत्यत्राह, DB इत्याह for इत्यत आह. After इत्यत आह DA inserts अमावास्यामित्यत्राह.

इत्यादि। प्रतीक्षेत पितृयज्ञाद्यर्थमिति शेषः। प्रकृते च पूर्वदिनेऽपराह्णाप्राप्त्या परदिने च वासरतृतीयांशाप्राप्त्या अमावास्याप्रतीक्षाया असंभवाच्चतुर्दश्यन्त एवेति। यदा तु दिनद्वयेऽपि मुख्यापराह्णसंबन्धिनी पूर्वदिनवर्तिचतुर्दश्यपेक्षया वृद्धिह्रास-शून्यामावास्या तदाह

संमिश्रा ( कात्यायनस्मृति १६.९ )

इत्यादि। अयं च विकल्पः शाखिभेदव्यवस्थित इत्याह लघुहारीतः

त्रिमुहूर्तापि कर्तव्या पूर्वा दर्शा च बह्वृचैः।
कुहूरध्वर्युभिः कार्या यथेष्टं सामगीतिभिः॥

कुहूः परदिनगा। अध्वर्यवो यजुर्वेदिनः। उक्त एव विषयेऽमावास्यायाः परदिने वर्धमानत्वे आह

वर्धमानाम् ( कात्यायनस्मृति १६.१० )

इत्यादि। पूर्वदिनेऽपराह्णसंबन्धित्वे सति यदि परदिने प्रहरत्रयमधिकं वा पूर्वतिथ्यपेक्षया वर्धमानामावास्या व्याप्नोति तदा तदहरेव पितृयज्ञः

1. DC, AS, VSP पितृयज्ञार्थमिति. DA तु for च. DA पूर्वदिने त्वपराह्णा-. DA omits -प्राप्त्या (after अपराह्णा-). 2. VSP omits च. DC, DD अमावास्यायाः प्रतीक्षाया-. DA, DB, DC, VSP insert च after असंभवात् 3-4. DC, DD -पेक्षया ह्रासवृद्धिशून्या-. 4. AS तदा तु, SP तत्राह for तदाह. 6. DA इति for इत्यादि. After इत्यादि DA inserts : "खर्वितां नीचां निन्दितां केचिदाहुः। अपरे तु तामेव उपेष्वम् उपगच्छत इति मन्यन्ते". AS, VSP शाखिभेदेन व्यवस्थित-. 7. VSP च for अपि. 8. AS, SP insert इति after सामगीतिभिः. 9. DB अध्वर्युर्यजुर्वेदी for अध्वर्यवो यजुर्वेदिनः. DA, DC, DD उक्तविषये-. 9-10. VSP परदिनवर्धमानत्वे. 12. DB -पराह्णसंबन्धे यदि. DC, DD omit यदि. 13. After वा DA, DC, DD, VSP insert श्राद्धयोग्यवासरतृतीयांशापराह्णमिति यावत्.

श्राद्धपिण्डपितृयज्ञात्मको भवेदिति। सर्वमेतत् साग्निविषयम्। निरग्नेस्तु नवममुहूर्तोपरिमुहूर्तत्रयात्मकोऽपराह्णः प्रशस्ततमः, नवमेन सह मुहूर्तचतुष्टयं प्रशस्ततरम्, अष्टमेन सह मुहूर्तपञ्चकं प्रशस्तम्, रात्रिसंध्यादीतरकालस्तु सामान्यः। तत्र दिनद्वये मुख्यापराह्णप्राप्तौ

ययास्तम्

इत्यादिगृह्यपरिशिष्टवचनात् पूर्वदिने श्राद्धम्। उभयत्र प्रशस्ततमापराह्णाप्राप्तौ तु रौहिणादौ यथायोग्यं श्राद्धमिति सामान्यकृष्णपक्षीयतिथितुल्यैव व्यवस्थेति संक्षेपः। विस्तरस्त्वस्मदीयसिद्धान्तादर्शेऽनुसंधेय इति ॥

## अथ वैशाखादिमासीयतिथिकृत्यनिर्णयः ॥

तत्र मेषसंक्रान्तौ गङ्गास्नाने वर्षार्धकृतगङ्गास्नानफलम्। तदुक्तं भविष्ये

1. DB श्राद्धयज्ञात्मको भवेदिति, AS श्राद्धं पिण्डपितृयज्ञात्मको भवेदिति, SP श्राद्धपिण्डपितृयज्ञाख्यः स भवति (omitting इति). VSP इत्यर्थः for इति. DA, VSP omit सर्वमेतत् साग्निविषयम्. SP नवमुहूर्तो-. 2. DC, DD समं for सह. 3. DC, DD, SP -संध्येतर-. 6. DB, DC, DD, AS, VSP omit -गृह्य-. VSP च for तु. 7. DC रोहिणादौ. VSP omits श्राद्धम्. DB, SP -तुल्यव्यवस्थेति. DC, DD, SP केचित् for संक्षेपः. AS, VSP omit संक्षेपः. After संक्षेपः DC, DD, AS, SP, VSP insert "तन्निर्युक्तिकम्। संकोचे हेत्वभावात्। अन्ये तु दशम-(SP दश- for दशम-) मुहूर्तस्यापराह्ण-(DC, DD -वाद- for -राह्ण-) त्वेऽपि तस्य त्यागः पिण्डपितृयज्ञार्थ एवेति वासरतृतीयांशादि-(DC, DC -यां स- for -यांशादि-)विधानं साग्निपरमेवेत्याहुः। तदपि न साधीयः। पूर्वाह्णो वै देवानामित्यत्र (VSP omits इत्यत्र) मध्यंदिनं मनुष्याणामित्यनेन मनुष्यकर्माङ्गत्वस्यैव (VSP -कर्माङ्गत्वेन for -कर्माङ्गत्वस्यैव) त्यागे (SP त्याग-; VSP omits त्यागे) हेतुत्वाव-(DC, DD हेत्वाव-) गमादिति संक्षेपः (DC, SP omit संक्षेपः)।" 8. VSP विस्तार-. DA सिद्धान्तादर्शे (omitting अस्मदीय-), DC, DD अस्मदीयगूढार्थदीपिकायां सिद्धान्तादर्शे च, SP अस्मदीयगूढार्थदीपिकायाम् for अस्मदीयसिद्धान्तादर्शे. DA ज्ञेयः for अनुसंधेयः. 9. SP अथ वैशाखकृत्यनिर्णयः for the whole line. VSP omits -तिथि-. 10. DC, DD -स्नानेन वर्षा-.

अयने विषुवे चैव यः स्नायाज्जाह्नवीजले ।
गङ्गास्नानस्य वर्षार्धकृतस्य फलमाप्नुयात् ॥

तत्र श्राद्धं पिण्डरहितं पार्वणविधिना कार्यम् ।

अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते ॥

इति ब्रह्मपुराण-( २२०.५३-४ )-वचनात् सभोज्यघटदानं चैतद्दिन आरभ्यापरसंक्रान्तिपर्यन्तं कर्तव्यम् । एतदुत्सर्गानन्तरं च

ॐ एष धर्मघटो दत्तो ब्रह्मविष्णुशिवात्मकः ।
अस्य प्रदानात् सफला मम सन्तु मनोरथाः ॥

इति मन्त्रः पठनीयः । अत्र

मेषादौ सक्तवो देया वारिपूर्णा च गर्गरी,

तथा

सक्तून् शर्करया मिश्रान् दद्यात् सजलगर्गरीम्

इत्यादिदर्शनादत्रैव यवपाकनिमित्तं श्राद्धमावश्यकमिति व्यामोह एव, पुरातनसक्तुदानेनाप्युपपत्तौ यवपाकश्राद्धबोधकत्वे मानाभावात्, किं तु

3. DB, AS, SP, VSP अत्र for तत्र. AS, SP, VSP insert च after तत्र. SP कर्तव्यमिति for कार्यम्. 6. AS सभोज्यजलपूर्णघट-. DA च तद्दिनादौ आरभ्या-, AS (before correction), VSP चैतद्दिनादारभ्या-. 6-7. DC, DD, AS (after marginal correction from आरभ्यापरसंक्रान्ति यावत्) नान्यत्र मेषादाविति वचनात् for आरभ्यापरसंक्रान्तिपर्यन्तं. 7. DB, DC, DD, AS (after correction) omit कर्तव्यम्. VSP कार्यम् for कर्तव्यम्. DA तदुत्सर्गान्तरं, DC, DD उत्सर्गानन्तरं for एतदुत्सर्गानन्तरं. 8. DA, DC, DD omit ॐ. 9. DA सफलात्, SP सकला- for सफला-. DD यान्तु for सन्तु. 12. DA यथा for तथा. 14. DA -पाकनिमित्तकं श्राद्ध-, DB -पाकश्राद्ध- for -पाकनिमित्तं श्राद्ध-. DA omits आवश्यकम्. DA मोह- for व्यामोह-. DA omits एव. DC, DD, पुरातनधान्यसक्तु-. 15. DA यवपाकनिमित्तकश्राद्ध-. DD, DD -बोधकत्वे प्रमाणाभावात्.

शरद्वसन्तयोः केचिन्नवयज्ञं प्रचक्षते

(कात्यायनस्मृति २६.६) इति छन्दोगपरिशिष्टवचनात्,

चैत्रे पौषे कृष्णपक्षे नवान्नं नैव कारयेत्

इति विष्णुधर्मोत्तरवचनात्,

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि।
अत्र श्राद्धं न कुर्वीत पुत्रदारधनक्षयात्॥

तथा

मेषूग्राहिशिवान्येषु विभौमशनिवासरे।
अन्नप्राशनवत् कुर्यान्नवान्नफलभक्षणम्॥

तथा

निरंशं दिवसं विष्टिं व्यतीपातं च वैधृतिम्।
केन्द्रं चापि शुभैः शून्यं पापाह्नमपि वर्जयेत्॥

इत्यादिवचनाच्चानिषिद्धदर्शान्तवैशाखे कर्तव्यम्। अत्राप्यक्षयतृतीयायां यदि निषेधाविषयत्वं तदा तस्यामेव यवानां प्राशस्त्यस्य वक्ष्यमाणत्वात्तत्र श्राद्धं कार्यमिति।

1. VSP प्रसश्यते (प्रशस्यते?). 2. DA omits छन्दोग-. 3. DB, DC चैत्रपौषे कृष्ण-, SP, VSP पौषे चैत्रे कृष्ण-. [Instead of चैत्रे पौषे Vk, p. 243, St I, pp. 261, 809 and 812, etc. read पौषे चैत्रे]. 4. After line 4 DB, SP insert 'नवान्नं नैव नन्दायां न च सुप्ते जनार्दने' (SP adds इति after जनार्दने) and DC, DD insert 'नवान्नं नैव नन्दायामिति.' 5. SP inserts तथा before नन्दायां 9. DC, DD -भक्षणमिति. 12. DA ग्रहैः for शुभैः. DB, AS, SP, VSP हीनं for शून्यं. [For the reading शून्यं see Vk, pp. 217 and 245, Śd-k, p. 210, and so on]. DA पापाह्नमिति वर्जयेत्. 13. SP -वचनजाताच्चा-. DC, DD -निषिद्धे दर्शान्ते वैशाखे, AS, SP, VSP -निषिद्धे दर्शान्तवैशाखे. DC, DD, AS तत्रापि, SP तत्र च for अत्रापि. 13-14. DA, DB, SP यदि निषिद्धाविषयत्वं. 14. AS -त्वात्तच्छ्राद्धं.

तथा, सौरवैशाखे प्रातःस्नानं हविष्यादिकं च कार्यम्,

तुलामकरमेषेषु प्रातःस्नायी भवेन्नरः।
हविष्यं ब्रह्मचर्यं च महापातकनाशनम्॥

इति स्मृतेः। चान्द्रवैशाखशुक्लतृतीया त्वक्षया युगाद्या च। भविष्योत्तरे

वारिदानं प्रशस्तं स्यान्मोदकानां च वै भवेत्।
वैशाखे मासि राजेन्द्र तृतीयां चन्दनस्य च॥
वारिणा तुष्यते देवी मोदकैर्भव एव च।
दानात्तु चन्दनस्येह कञ्जजो नात्र संशयः॥
यत् किंचिद्दीयते दानं स्वल्पं वा यदि वा बहु।
तत् सर्वमक्षयं यस्मात्तेनेयमक्षया स्मृता॥
कलधौतं तथा ताम्रं घृतं चापि विशेषतः।
अस्यां दत्तं त्वक्षयं स्यात्तेनेयमक्षया स्मृता॥
योऽस्यां ददाति करकान् वारिवाजसमन्वितान्।
स याति पुरुषो वीर लोकान् वै हेममालिनः॥

तृतीयामिति कालकर्म, कञ्जजो ब्रह्मा, करकान् कमण्डलून्, वाजमन्नम्, हेममालिनः सूर्यस्य। अत्र कृतकर्मणामक्षयत्वेन तृतीयामात्रस्याक्षयत्वश्रुतेर्नक्षत्रविशेषयोगेऽक्षयत्वप्रतिपादकानि वचनानि यदि समूलानि, तदा नक्षत्रविशेषयोगः प्राशस्त्यपर इति केचित्। यथाहुः

1. VSP -स्नानादिकं हविष्यं च. DB omits च. 2. VSP प्रातःस्नानं विधीयते for the second half. 3. AS वा for च. VSP -नाशकम्. 4. DB, SP -वैशाखे शुक्लतृतीया, DC, DD -वैशाखे शुक्ला तृतीया. DB, DC, DD omit तु; SP च for तु. DC, DD, AS, SP, VSP सत्ययुगाद्या for युगाद्या. DA भविष्ये for भविष्योत्तरे. 11. AS छत्रं for ताम्रं. 11-12. VSP omits the lines कलधौतं and अस्यां दत्तं. 14. DC, DD धीर for वीर. 15. DC, DD कालधर्मः for कालकर्म. 16. VSP omits -विशेष-. 17. DC, DD -प्रतिपादकानि विशेषवचनानि, SP -प्रतिपादकवचनानि. SP तदा च नक्षत्र-. 17-18. AS, SP, VSP प्राशस्त्यार्थं इति के-. 18. SP यदाहुः for यथाहुः.

वैशाखे मासि राजेन्द्र शुक्लपक्षे तृतीयिका।
अक्षया सा तिथिः प्रोक्ता कृत्तिकाभिर्युता यदि ॥
वैशाखे मासि राजेन्द्र शुक्लपक्षे तु या तिथिः।
तृतीया रोहिणीयुक्ता अक्षया सा प्रकीर्तिता ॥
तस्यां यद्दीयते दानं तदक्षयमुदाहृतम् ॥

इति। तथा, दुर्गां प्रकृत्य देवीपुराणे ( ५६.३-४ )

तृतीयायां तु वैशाखे रोहिण्यृक्षे प्रपूजयेत्।
उदकुम्भप्रदानेन ब्रह्मलोके महीयते ॥

विष्णुधर्मोत्तरे

भक्ष्यभोज्यसमायुक्तां वर्धनीं यः प्रयच्छति।
तृतीयायां तु वैशाखे ब्रह्मलोके महीयते ॥

यमः

वैशाखे शुक्लपक्षे तु तृतीयायां तथैव च।
गङ्गातोये नरः स्नात्वा मुच्यते सर्वपातकैः ॥

विष्णुः

वैशाखशुक्लतृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्य तानेव हुत्वा दत्त्वा च पूतो भवति सर्वपापेभ्यः। यच्च तस्मिन्नहनि प्रयच्छति तदक्षयमवाप्नोति। ( विष्णुस्मृति ९०.१७-१८ )

3. VSP -पक्षे(ऽ)क्षया तिथिः. 6. DA, SP omit इति. 8. DA तदा कुम्भ-. DA inserts इति after महीयते. 10. DC, DD भक्षभोज्य-. VSP गगरीं for वर्धनीं. 13ff. SP ( haplologically ? ) omits all words from वैशाखे शुक्लपक्षे तु to तथा ब्रह्मपुराणे (on p. 145, line 1). 14. VSP सर्वपापकैः. 16. DC, DD, AS वैशाखे शुक्लतृतीयायामुपो-, VSP वैशाखे शुक्लपक्षे तृतीयायामुपो-. 17. VSP omits दत्त्वा च. 19. VSP तदक्षय्यमवाप्नोति. [ The different editions of the Viṣṇu-smṛti read तदक्षय्यमवाप्नोति, so also does Kv, p. 408].

उपोषितो द्वितीयायामक्षतैर्यवैर्होमोऽपि विष्णवे, अर्चासाहचर्यात्। तथा ब्रह्मपुराणे

वैशाखे शुक्लपक्षे तु तृतीयायां जनार्दनः।
यवानुत्पादयामास युगं चारब्धवान् कृतम्॥
ब्रह्मलोकात्त्रिपथगां पृथिव्यामवतारयत्।
तस्यां कार्यो यवैर्होमो यवैर्विष्णुं समर्चयेत्॥
यवान् दद्याद्द्विजातिभ्यः प्रयतः प्राशयेद् यवान्।
पूजयेच्छंकरं गङ्गां कैलासं च हिमाचलम्।
भगीरथं च नृपतिं सागराणां सुखावहम्॥
स्नानं दानं तपः श्राद्धं जपहोमादिकं च यत्।
श्रद्धया क्रियते तत्र तदानन्त्याय कल्पते॥
सिन्धोस्तीरे विशेषेण सर्वमक्षयमुच्यते॥

सिन्धुर्नदीविशेष इत्येके। अत्र श्राद्धमक्षयतृतीयानिमित्तकमिति कश्चित्। तन्न। श्राद्धभेदे विधिगौरवापत्तेः। प्राप्ते श्राद्धे गुणफलविधित्वस्यैव न्याय्यत्वात्। प्राप्तिश्च तस्या युगादित्वेन तद्विहितश्राद्धस्य यवपाकनिमित्तश्राद्धस्य चेति। तदुक्तं ब्रह्मपुराणे

युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते॥

1. DC, DD insert च after यवैः. VSP तदाह for तथा. DC, DD, AS, VSP ब्रह्मपुराणम्. 2. DC, DD -पक्षस्य तृतीया-. 3. DA, AS transpose युगं and कृतम्. 4. DC, DD -मवतारयेत्. 5. DA अक्षतैः (also यवैः) for यवैः (after होमो). 7 DB, DC, DD, SP, VSP हिमालयम् for हिमाचलम्. [For the reading हिमालयम् see St I, pp. 31 and 496 and II, p. 427, and so on]. 7-10. DD omits all words from पूजयेच्छंकरं to तदानन्त्याय कल्पते. 10. DB, DC कल्प्यते. [In Bṛhaddharma-p. I. 16. 18, Vk, p. 246, St I, pp. 31 and 497, etc. the reading कल्प्यते is found]. 12. DB सिन्धुर्नदीविशोषेत्येके, DC, DD, AS, SP, VSP सिन्धोर्नदीविशेषस्येत्येके. DA -निमित्तमिति. DC, DD, AS, SP, VSP insert कार्यम् after -निमित्तकम्. DA केचित् for कश्चित्. 13. DB विधिभेदा-द्गौरवापत्तेः. AS युक्तत्वात् for न्याय्यत्वात्. 14. VSP तस्य for तस्याः. DC, DD तस्याः कृतयुगादित्वेन. DC, DD -श्राद्धनिमित्तस्य for -निमित्तश्राद्धस्य. DB omits ब्रह्म-. 15. SP युगाद्यासु युगान्ते-.

तथा

वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम् ।
कार्त्तिके शुक्लपक्षे तु त्रेताथ नवमेऽहनि ॥
अथ भाद्रपदे कृष्णत्रयोदश्यां तु द्वापरम् ।
माघे च पौर्णमास्यां च घोरं कलियुगं स्मृतम् ॥
सूर्यस्य सिंहसंक्रान्त्यामन्तः कृतयुगस्य तु ।
अथ वृश्चिकसंक्रान्त्यामन्तस्त्रेतायुगस्य च ॥
ज्ञेयश्च वृषसंक्रान्त्यां द्वापरान्तश्च संज्ञया ।
तथा च कुम्भसंक्रान्त्यामन्तः कलियुगस्य च ॥

अत्र वैशाखादयः पौर्णमास्यन्ता एव ग्राह्याः, ब्रह्मपुराणे तथैव तिथिकृत्याभिधानात्,

कार्त्तिके नवमेऽहनि

इत्यनेनैव प्राप्तौ

शुक्लपक्षे

इत्यस्य वैयर्थ्यापत्तेश्च । युगान्तेषु राशिविशेषकीर्तनात् सौरादर एव ।

ननु, अक्षयतृतीयायां सत्ययुगारम्भात् कुम्भसंक्रान्त्यनन्तरितकालस्य कीदृग्रूपता स्यात् ?

1. VSP omits तथा . 4. DB -पदे मासि त्रयोदश्यां . [ The reading मासि त्रयोदश्यां occurs in St II, p. 427, whereas कृष्णत्रयोदश्यां is found in Acom., p. 425, Śk, p. 303, St I, p. 187, and so on. In Sc IV, p. 28, Mp, p. 539 and Vk, p. 247 the reading कृष्णे त्रयोदश्यां is found ]. 5. AS माघीयपौर्ण-. DA तु for च (after माघे). DC, DD, SP तु for च (after पौर्णमास्यां). 6. DB, AS, SP, VSP च for तु . 7. DD repeats the whole line अथ वृश्चिक- etc. DC, DD तु for च. 9. DC, DD, SP, VSP insert इति after कलियुगस्य च . 10. SP inserts च after अत्र . DC, DD तिथिकृत्यत्वाभिधानात् . 14. VSP omits च . DA युगान्तेषु तु राशि-, DB, DC, DD, AS, SP युगान्ते राशि- .

सत्ययुगान्तयुगारम्भयोर्मध्ये संध्यासंध्यांशयोरप्युक्तत्वात्तद्रूपतेत्यवेहि। तदाह मनुः ( १.६९-७० )

चत्वार्याहुः सहस्राणि वर्षाणां तत् कृतं युगम्।
तस्य तावच्छती संध्या संध्यांशश्च तथाविधः॥
इतरेषु ससंध्येषु ससंध्यांशेषु च त्रिषु।
एकापायेन वर्तन्ते सहस्राणि शतानि च॥

अत्र केचित्

वैशाखमासस्य च या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे।
नभस्यमासस्य तमिस्रपक्षे
त्रयोदशी पञ्चदशी च माघे॥
एता युगाद्याः कथिताः पुराणै-
रनन्तपुण्यास्तिथयश्चतस्रः॥
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात् पितृभ्यः प्रयतो मनुष्यः।
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत् पितरो वदन्ति॥

1. DA, DB, DC, DD, AS, SP, VSP सत्यं for सत्य-. DC repeats युगान्त-. DB -युगाद्ययो- for -युगारम्भयो-. DA संध्यांशस्याप्युक्तत्वा-, DB संध्यासंध्यांशस्याद्युक्तत्वा-, DC, DD संध्यासंध्यांशयोरुक्तत्वा-, AS, SP, VSP संध्यासंध्यांशस्याप्युक्तत्वा-. DC, DD insert इति after इत्यवेहि. SP omits तदाह. 4. DB, DD, AS तस्याः for तस्य. 6. AS एकपादेन. DC, DD, SP, VSP insert इति after शतानि च. 7. AS, SP कश्चित् for केचित्. 8. DB, DC, DD तु या, SP सिता for च या. [ For च या Kv, p. 391, Acom., p. 425, Mp, p. 538, Vk, p. 246, Sk, p. 302, St I, p. 187, etc. read तु या, whereas Sc I, p. 157 and IV, p. 28 have सिता. Pbh., I. i, p. 156 and ii, p. 311 read as in text]. [ 9ff. The verse वैशाखमासस्य च या तृतीया is the same as Bhaviṣya-p. IV. 101. 4 ]. 11. DA, DB, DC, DD, SP, VSP तमिश्रपक्षे.

इति विष्णुपुराणवचने ( ३.१४.१२-१३, १५ ) पञ्चदशीत्यत्र तमिस्रपदानुषङ्गान्माघमासीयामावास्यैव कलियुगादिः ;

माघे च पौणमास्यां च घोरं कलियुगं स्मृतम्

इत्यत्र ब्रह्मपुराणीये "पूर्णो मासोऽस्यां वर्तते" ( काशिका ४.२.३५ ) इति व्युत्पत्त्या पौर्णमासीपदममावास्यापरम् ; अतएव

द्वे शुक्ले द्वे च कृष्णे वै युगाद्ये परिकीर्तिते।
शुक्ले पूर्वाह्णिके ज्ञेये कृष्णे चैवापराह्णिके॥

तथा

नवम्यां शुक्लपक्षस्य कार्त्तिके निरगात् कृतम्।
त्रेता सिततृतीयायां वैशाखे समपद्यत॥
दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्।
कलिः कृष्णत्रयोदश्यां नभस्ये मासि निर्गतः॥

इति भविष्यपुराणे निःसंदिग्धदर्शपदश्रुतिरिति। तदतीव मन्दम्।

नभस्यमासस्य ( विष्णुपुराण ३.१४.१२ )

इत्यनेनैवान्वये तमिस्रपक्षपदस्य निराकाङ्क्षत्वादनुषङ्गकल्पने मानाभावाद्गौरवाच्च।

1. DC, DD, AS, SP, VSP -पुराणे for -पुराणवचने. DA, DB, DC, DD, SP तमिश्रपदा-. 2. DA omits एव. 3. DA, DB, SP. तु for च (after माघे). Cf. p. 146, line 5 for the reading of this line ( माघे च पौर्णमास्यां च etc. ). DC, DD हि, SP तु for च ( after पौर्णमास्यां ). 4. DA transposes अस्यां and वर्तते. [ For पूर्णो मासो- Kāśikā reads पूर्णमासो- ]. VSP omits व्युत्पत्त्या 6. DA तथा कृष्णे for च कृष्णे वै. DB, DC, DD, AS omit वै. 7. DB, AS, SP, VSP omit the entire line शुक्ले पूर्वाह्णिके etc. DC, DD omit ज्ञेये. 9. VSP -पक्षे तु का-. 10. DB त्रेताथ तृतीयायां. 13. DA भविष्ये for भविष्यपुराणे. AS -दर्शरूपश्रुति-. DC, DD -श्रुतेरिति. DA तन्न for तदतीव मन्दम्. 14. VSP inserts एव after -मासस्य. 15. DA, DC, DD, SP, VSP तमिश्रपक्ष-. DB omits -पक्ष-.

अतोऽविशेपितपञ्चदशीपदात् पौर्णमास्येव कलियुगाद्या, निश्चितमूलब्रह्मपुराणैकवाक्यत्वात्। न च

दर्शे तु माघमासस्य

इत्यनेनैकवाक्यत्वानुरोधेन विष्णुपुराणेऽनुषङ्गे ब्रह्मपुराणेऽपि पौर्णमासीपदस्योक्तव्युत्पत्त्या दर्शपरत्वमस्त्विति वाच्यम्।

दर्शे तु माघमासस्य

इत्यादेः संदिग्धमूलत्वान्निश्चितमूलब्रह्मपुराणविष्णुपुराणयोस्तदनुरोधेनान्यथावर्णनस्यानौचित्यात्। किं च,

दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्

इत्यनेनैकवाक्यत्वमपि ब्रह्मपुराणविष्णुपुराणयोर्न घटते। एतयोः सत्यत्रेताद्वापरकलिक्रमेणाभिधानान्माघमासीयदर्शे कलियुगारम्भो वाच्यः, तदा च

दर्शे तु माघमासस्य प्रवृत्तं द्वापरं युगम्

इत्यनेन द्वापरयुगारम्भबोधकेन सह कथमेकवाक्यतेति? यदपि पौर्णमासीशब्दस्याभिहितव्युत्पत्त्यामावास्यापरत्वं चिन्तितं तदपि मन्दतमम्। एवं सौरमासान्ततिथिव्यावर्तनायावश्यं प्रयोगोपाधिर्वाच्यः, तेनैवोक्तव्युत्पत्त्या नामावास्यायां साधुता, कुमुदे पङ्कजनिकर्तृत्वव्युत्पत्त्या पङ्कजपदस्येवेति। वस्तुतस्तु पौर्णमासीपदस्य प्रयोग-

1. SP omits -मूल-. 2. DA -वाक्यतया for -वाक्यत्वात्. 3. DA दर्शेन माघ-. VSP च for तु. 4. VSP इत्याद्यनेकवाक्यत्वा-. AS विष्णुपुराणानुषङ्गो. DC, DD -मासीप्रदस्योक्त-. 7. त्वनुरोधेन for तदनुरोधेन. 10. DC, DD, SP इति for अपि. AS -विष्णुपुराणीययो र्न. DA संभवति for घटते. 11. DD -कलियुगक्रमेणा-. SP तथा for तदा. DC, DD, SP omit च. 12. AS, VSP च for तु. 13. AS -युगान्तबोधकेन. 13-14. DA -पदस्योक्त-, DC, DD -शब्दस्याविहित- for -शब्दस्याभिहित-. 14. DA दर्श- for अमावास्या-. DB -परमिदं चिन्तितं. DA उक्तं for चिन्तितं. DA मन्दम् for मन्दतमम्. 15. DC, DD -व्यावर्तनतयावश्यं. DA -र्वाच्यं. DA, DB नामावास्यायाः, DC, DD अमावास्यायां for नामावास्यायां. 16. DA -कर्तृ-, DB -कर्तृकत्व- for कर्तृत्व-.

नियमकल्पनाविशेषगौरवान्नेयं व्युत्पत्तिः, किंतु पूर्णो माः पूर्णमास्तस्येयं पौर्णमासीति। माश्चन्द्रः। अतएव

महाराजप्रोष्ठपदाट्ठञ् (अष्टाध्यायी ४.२.३५)

इत्यत्र सूत्रे वार्त्तिककृता

पूर्णमासादण्

इत्यभिधाय

तदस्मिन् वर्तते

इत्यादिना यदुक्तं तत्

पूर्णो माः

इत्यादिना वृत्तिकृता जयादित्येन प्रत्याख्यातमिति (काशिका ४.२.२१)। अतो

द्वे शुक्ले

इत्यादि

नवम्यां शुक्लपक्षस्य

1. DA -नियामक- for -नियम-. DA omits -विशेष-. AS -गौरवार्थेयं व्युत्पत्तिः. DA चन्द्र-, DB, DC, DD, VSP पूर्णिमा- for पूर्णमा-. 2. DB, DC, DD, AS, SP, VSP omit इति. DA omits माश्चन्द्रः. [ The alternative derivation of पौर्णमासी is given in Kāśikā on Pāṇini's Aṣṭādhyāyī IV. 2. 21 as follows : "अथ वा पूर्णो माः पूर्णमाः, पूर्णमास इयं पौर्णमासी। मा इति चन्द्र उच्यते ॥" ]. 3. DA, SP -प्रौष्ठपदाच्च(ट्ठ ?)ञ्, DC, DD -प्रौष्ठपदाच्च, AS -पौष्ठपदाट्ठञ्. 5. DB, SP पौर्णमासादण्. 7. DB, DC, DD, AS, SP तस्मिन् for तदस्मिन्. After वर्तते DB inserts इत्यर्थवर्तते (corrupt) and AS, SP, VSP insert इत्यनुवर्तते 9. DA, DB पौर्णो माः. 10. DA transposes वृत्तिकृता and जयादित्येन. DB omits इति (after प्रत्याख्यातम्). DD ततो for अतो. 11. DB inserts द्वे after शुक्ले. 12-13. DD omits इत्यादि नवम्यां शुक्ल- haplologically.

इत्याद्यपि च समूलत्वे कल्पभेदव्यवस्थितमिति श्वेतवाराहकल्पपरम्, विष्णुपुराणैकवाक्यतया ब्रह्मपुराणवचनं त्वेतत्कल्पव्यवस्थापकमिति पौर्णमास्येव युगाद्येति। युगाद्याश्राद्धे च

अयनद्वितये श्राद्धं विषुवद्वितये तथा।
संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते॥
(ब्रह्मपुराण २२०.५३-४)

तथा

वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य च।
श्राद्धं कार्यं च शुक्लायां संक्रान्तिविधिना नरैः॥
(ब्रह्मपुराण २२०.५४-५५)

इति वचनाभ्यां व्यवहारानुरोधाच्च पिण्डदानं न कर्तव्यम्। केचित्तु

ततः प्रभृति संक्रान्तावुपरागादिपर्वसु।
त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि॥

इति मत्स्यपुराण-(१८.२२-२३)-वचने त्रिपिण्डप्रतीतेरुक्तवचनयोः समूलत्वे पिण्डदानादानयोर्विकल्पः षोडशिग्रहणाग्रहणवदित्याहुः। तच्चिन्त्यम्।

1. DA omits च. VSP -वराह- for -वाराह-. DA -वाराहकल्पविषयविष्णुपुराणैक-, AS -वाराहपरविष्णुपुराणैक-. 2. VSP त्वेककल्प- for त्वेतत्कल्प-. DC, DD कलियुगाद्या for युगाद्या. DB omits इति (after युगाद्या). 3. DB -श्राद्धेषु for -श्राद्धे च. 8. VSP transposes श्राद्धं and कार्यं. DC, DD कृतं for कार्यं. 12. AS inserts शक्ताशक्तभेदेन and SP अपि after समूलत्वे. 12-13. DB, DD omit समूलत्वे पिण्डदानादानयोः. 13. VSP inserts इति after विकल्पः. DD षोडशिग्रहणवदित्याहुः. DA omits इत्याहुः. After तच्चिन्त्यम् DB inserts तच्च पारणश्राद्धं कार्यमभ्युदयादृते इत्येकवाक्यतया and VSP inserts "सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते। तत्र पार्वणवच्छ्राद्धं कार्यमभ्युदयादृते॥ इत्येकवाक्यतया".

एकोद्दिष्टं मृताहनि

इत्येतत्प्रतियोगितया त्रिपिण्डपदस्य पार्वणपरत्वावधारणात्। अन्यथा षाट्पुरुषिके त्रैपुरुषिकपिण्डदानाभावप्रसङ्ग इति। तदेवं यदि तदहरेव यवपाकनिमित्तकश्राद्धं क्रियते तदा श्राद्धद्वयमेव, गृह्यमाणविशेषत्वेन तन्त्रन्यायानवकाशादिति। अत्र च खण्डतिथिद्वैधे दैवकर्मण्युदयसंबन्धिन्येव ग्राह्या,

मन्वन्तरा युगाद्या च सप्तमी पार्वतीप्रिया।
रवेरुदयमीक्षन्ते न तत्र तिथियुग्मता॥

इति स्मृतेः,

रम्भाख्यां वर्जयित्वा

इति पूर्वोक्तवचनाच्च।

2. DB पिण्डपदस्य, DC, DD त्रिपिण्डदानस्य for त्रिपिण्डपदस्य. SP omits -पर-. DB insters च after -धारणात्. 2-3. DA, DC, DD षाट्पुरुषिकपिण्डदानाभावप्रसङ्ग-, DB षाट्पुरुषिके द्वैपुरुषिकपिण्डदानाभावप्रसङ्ग-, AS षाट्पौरुषिकत्रैपौरुषिकपिण्डदानाभावप्रसङ्ग-, SP षाट्पुरुषिकत्रैपुरुषिकपिण्डदानयोरपि प्रसङ्ग-, VSP षाट्पुरुषिकद्वैपुरुषिकपिण्डदानाभावप्रसङ्ग-. 3. DA omits इति. DB तदैवं, SP यदैवं for तदेवं. SP omits यदि. DB, AS -निमित्तश्राद्धं, DC, DD -निमित्तं श्राद्धं for -निमित्तकश्राद्धं. 4. DB -विशेषत्वे, VSP -विषयत्वेन for -विशेषत्वेन. AS तन्त्रतान्याया-. DA omits इति. DC, DD अथ for अत्र. DB, DC, DD, VSP omit च (after अत्र). 5. DC, DD, AS, VSP खण्डतिथित्वे for खण्डतिथिद्वैधे. DA द्वैवे कर्मणि, DC देवकर्मणि for दैवकर्मणि. 6. DB, SP युगाद्या वर्षवृद्धिस्तु (SP च for तु) for मन्वन्तरा युगाद्या च. DA युगाद्याः for युगाद्या. [The reading युगाद्या वर्षवृद्धिश्च instead of मन्वन्तरा युगाद्या च is found in Dv, p. 8, Vk, pp. 10, 249 and 380, St I, pp. 25, 76 and 187 and II, p. 427, and so on. Śrīnātha also accepts the reading "युगाद्या वर्षवृद्धिश्च". -See *infra* ]. 8. SP omits स्मृतेः. DB, AS insert इति after स्मृतेः. 9. AS वर्जयेत् for वर्जयित्वा. DC, DD, AS insert तु after वर्जयित्वा. 10. After -वचनाच्च DA, VSP insert : पितृकृत्ये शुक्लपक्षे तिथिर्ग्राह्येति वचनात् परदिन एवेति.

वैशाखशुक्लसप्तम्यां जाह्नवी जह्नुना पुरा।
क्रोधात् पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात्॥
तां तत्र पूजयेद्देवीं सर्वकर्मफलेच्छया॥

( नारदीयपुराण २,४१,३७-३८ ) इति। तथा नारदीये

वैशाखे शुक्लपक्षे तु द्वादशी वैष्णवी तिथिः।
तस्यां शीतेन तोयेन स्नापयेत् केशवं शुचिः॥

इयमेव पिपीतकद्वादशी। अत्र तिथिद्वैधे युग्मादरात् पूर्वदिन एवैतद्व्रतं कार्यम्,

रुद्रेण द्वादशी युक्ता

इति युग्मवचनात्। एतच्चोपवासमन्तरेणापि कार्यम्, अन्यथा द्वादशीक्षये व्रतलोपापत्तिः। उपवासे तु फलातिशय इति प्राञ्चः। वैशाखीं पौर्णमासीं प्रकृत्य यमः

1. DC, DD, AS, SP, VSP वैशाखे शुक्ल-. [ Nāradīya-p. II. 41. 37a reads वैशाखशुक्ल-, but in Vk, p. 251 the reading वैशाखे शुक्ल- is found ]. 2. DB तेन for क्रोधात्. DB मुक्ता, DC, DD त्यक्त्वा for त्यक्ता. 3. DA -कार्य-, AS -काम- for -कर्म-. DD -फलेषु या, VSP -वरेच्छया for -फलेच्छया. 4. DB, VSP omit इति. 6. AS, SP, VSP शीतल- for शीतेन. [ In Vk, p. 251, St I, p. 114 and II, p. 428, etc. the reading शीतल- occurs]. 7. DB, AS, SP, VSP insert इति before इयमेव. AS, SP पिपीतकी द्वादशी. DA तत्र for अत्र. DA, DB तद्व्रतं, AS व्रतं for एतद्व्रतं. 9. VSP omits युग्म-. DA कर्तव्यम् for कार्यम्: VSP -लोपे for -क्षये. 10. DB, DC, DD, VSP -लोपापत्तेः for -लोपापत्तिः. DB inserts इति after -लोपापत्तिः. AS, VSP place all words from वैशाखीं पौर्णमासीं to पापेन लिप्यते (on p. 154, line 6) after इला पृथ्वी on p. 154, line 13. 6. VSP वैशाखपौर्णमासीं for वैशाखीं पौर्णमासीं.

२०.

गौरान् वा यदि वा कृष्णांस्तिलान् क्षौद्रेण संयुतान्
दत्त्वा दशसु विप्रेषु तानेव स्वस्ति वाचयेत् ॥
प्रीयतां धर्मराजेति पितॄन् देवांश्च तर्पयेत् ।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥
अब्दायुतं च तिष्ठेत् स स्वर्गलोके न संशयः ।
मामेव स न पश्येत्तु न स पापेन लिप्यते ॥

ज्योतिषे

पञ्चाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद् यदि शुक्लपक्षे ।
मासाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥

पञ्चाननः सिंहः, मासाभिधाना तिथिर्द्वादशी, करभं हस्ता ।

अस्मिंस्तु गोभूमिहिरण्यवस्त्रदानेन सर्वं परिहाय पापम् ।
सुरत्वमिन्द्रत्वमिलाधिपत्वं लभेत् पुमान् दानवशात् तदैव ॥

इला पृथ्वी ।

मसूरं निम्बपत्राभ्यां योऽत्ति मेषगते रवौ ।
मेषस्थे च विधौ तस्य नास्त्यङ्गे विषजं भयम् ॥

1. AS haplologically omits यदि वा. 2. DA, DB द्वादशसु for दत्वा दशसु. 3. SP पितृदेवांश्च for पितॄन् देवांश्च. 5. VSP तिष्ठेत for तिष्ठेत्. DB, SP तु for सः. DC, DD, VSP omit सः (haplologically ?). [ St. I, p. 134 reads तिष्ठेत for तिष्ठेत् सः ]. 6. DB, SP, VSP tranpose सः and न (after मामेव). 10. DA हस्तानक्षत्रं for हस्ता. 11. DA inserts तथा before अस्मिंस्तु. DC, DD च for तु. DB omits -वस्त्र-. 12. SP इलाधिपतित्वं, VSP इलाधिपत्यं for इलाधिपत्वं. DB दानफलात्, SP दानबलात् for दानवशात्. 13. DA इलः for इला. DD पृथिवी for पृथ्वी.

# अथ ज्यैष्ठकृत्यम् ॥

तत्र भविष्यपुराणं

ज्यैष्ठे मासि द्विजश्रेष्ठ कृष्णाष्टम्यां त्रिलोचनम् ।
यः पूजयति देवेशमीशलोकं स गच्छति ॥

अत्र च यावन्ति तिथिकृत्यानि सर्वाणि तानि कृष्णप्रतिपदादिपौर्णमास्यन्तव्यवस्थया कार्याणि । ब्रह्मपुराणादिस्वरसात् ।

अत्र च मासि कृष्णचतुर्दश्यां सावित्रीव्रतम् । तत्र स्मृतिसमुच्चये पराशरः

ज्यैष्ठे मासि सिते पक्षे या तु षष्ठी तिथिर्भवेत् ।
महाषष्ठीति विख्याता दुर्लभा त्रिदशैरपि ॥
तस्याः पूर्वस्तु यः पक्षस्तस्य कृष्णा चतुर्दशी ।
मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत् ॥
ज्यैष्ठे कृष्णचतुर्दश्यां सावित्रीमर्चयन्ति याः ।
वटमूले सोपवासा न ता वैधव्यमाप्नुयुः ॥

अत्र तिथिद्वैधे त्रयोदशीदिने दिवा यद्येकदण्डव्यापिन्यपि चतुर्दशी लभ्यते उत्तरत्र चतुर्दशी नोदयास्तव्यापिनी तदा पूर्वदिन एव व्रतम् ,

2. DC, DD, SP omit तत्र. DA भविष्ये, DC, DD भविष्यपुराणे for भविष्यपुराणम्. 5. DB omits च. DB यावत्तिथिकार्याणि for यावन्ति तिथिकृत्यानि. DB, DC, DD, AS, SP, VSP omit तानि. DA, DC, DD, AS, SP -पौर्णमासव्यवस्थया. 6. DA -पुराणादिवचनात्, DC, DD -पुराणादित्व- (DD य for त्व) रसात् (corrupt) for -पुराणादिस्वरसात्. 7. DC, DD चतुर्दश्यां कृष्णपक्षे for कृष्णचतुर्दश्यां. DD अत्र for तत्र. 8. VSP च for तु. 10. VSP पूर्वं तु for पूर्वस्तु. 12. DC कृष्णा चतुर्दश्यां. 14. DC, DD, AS, SP, VSP insert च after अत्र. DA omits अपि. DA transposes यद्येकदण्ड-व्यापिन्यपि and चतुर्दशी (before लभ्यते). DC, DD, AS, SP, VSP omit चतुर्दशी (preceding लभ्यते). AS दृश्यते for लभ्यते. DD omits उत्तरत्र. 15. VSP inserts एतत् before व्रतम्.

दिवाभागे त्रयोदश्यां यदा चतुर्दशी भवेत्।
तत्र पूज्या महासाध्वी देवी सत्यवता सह ॥

इति नारदवचनात्। परदिने चतुर्दश्या उदयास्तव्यापित्वे पूर्वदिने दिवासंबन्धेऽपि परदिन एव,

त्रिसंध्यव्यापिनी या तु सैव पूज्या सदा तिथिः।
न तत्र युग्मादरणमन्यत्र हरिवासरात् ॥

इति पराशरवचनात्। यदा तु त्रयोदश्येवोदयास्तव्यापिनी परदिने चतुर्दशी नास्तपर्यन्तगा तदा परदिन एव। तदुक्तं ज्योतिषे

चतुर्दश्याममावास्या यदा भवति नारद।
उपोष्य पूजनीया सा चतुर्दश्यां विधानतः ॥

अतो यदमावास्यायां सावित्रीव्रतोपवासपरं वचनजातं श्रूयते तद् यदि समूलं तदामावास्यावच्छिन्नाहोरात्रपरमेवेति सकलगौडसंग्रहकारसंमता व्यवस्था। पाश्चात्यास्तु

भूतविद्धा न कर्तव्या दर्शपूर्णाः कदाचन।
वर्जयित्वा मुनिश्रेष्ठ सावित्रीव्रतमुत्तमम् ॥

3. DA, SP insert तु and VSP सति after -व्यापित्वे. 5. DD त्रिसंन्ध्याव्यापिनी. 7. DA च for तु. 8. DC नास्तपर्यन्तउदया, SP नास्तगा for नास्तपर्यन्तगा. DC omits तदा. 10. DA, DC, DD उपोष्या for उपोष्य. DC, DD, AS, SP insert इति after विधानतः. 11. DC, DD, VSP यदामावास्यायां. DC, DD -व्रतोपवासपरवचनजातं, SP -व्रतोपवासबोधकवचनजातं, VSP -व्रतोपवासवचनजातं. 12. AS -संग्रहकारव्यवस्था. 14. DA, DB, DC, DD, AS, VSP दर्शा पूर्णा, SP दर्शपूर्णा for दर्शपूर्णाः. DC, DD कथंचन for कदाचन. [14-15. The verse भूतविद्धा etc. is not found in the present Brahmavaivarta-p. ].

तथा

भूतविद्धाप्यमावास्या न कर्तव्या कदाचन।
वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन॥

इति ब्रह्मवैवर्तस्कन्दपुराणवचनाभ्याम्, तथा

पञ्चदश्यां तथा ज्यैष्ठे वटमूले महासतीम्।
त्रिरात्रोपोषिता नारी विधिनानेन पूजयेत्॥

(भविष्योत्तर १०२.८६)

तथा

अशक्ता तु त्रयोदश्यां नक्तं कुर्याज्जितेन्द्रिया।
अयाचितं चतुर्दश्याममावास्यामुपोषणम्॥

इति भविष्योत्तर-(१०२.६७)वचनाच्चामावास्यायामेवैतद्व्रतमिति वदन्ति। तच्चिन्त्यम्। पूर्वोक्तवचनैश्चतुर्दश्यामेव व्रतविधेरेतेषां वचनानामुक्तव्याख्यानुसारित्वात्। अतएव

2. DC, DD, SP, VSP कथंचन for कदाचन. [2-3. The verse भूतविद्धाप्यमावास्या is not found in the present Skanda-p.]. 4. DB, DC, DD, AS, SP, VSP -वचनात् for -वचनाभ्याम्. [Though the reading -वचनाभ्याम् occurs only in DA, we have preferred it because of the fact that the verse भूतविद्धा न कर्तव्या is ascribed to the Brahmavaivarta-p. in Kṛtya-tattvārṇava, pp. 156 as well as in Sc IV, p. 47, Kn, p. 277, Vk, p. 28, etc. and the verse भूतविद्धाप्यमावास्या is ascribed to the Skanda-p. in Kn, p. 195, Vk, p. 261, and so on]. VSP inserts च after -वचनाभ्याम्. 5. DB, DC, DD, VSP महासती. [The reading महासती occurs in Vk, p. 262, etc.]. 6. AS, VSP insert इति after पूजयेत्. 8. DC, DD अशक्त्या for अशक्ता. 10. VSP omits एव. DC, DD तद्व्रतम् for एतद्व्रतम्. 11. DB एतद्व त- for एव व्रत-. DB, DC, DD इतरेषां, VSP एषां for एतेषां.

कृष्णाष्टमी स्कन्दषष्ठी सावित्री च चतुर्दशी।
पूर्वविद्धैव कर्तव्या तिथिभान्ते च पारणम्॥

इति पारिजातलिखितवचनमपीति। अत्र च फलेनैव पारणा कार्या। यथा पराशरः

सावित्रीमर्चयित्वा तु फलाहारा परेऽहनि।
ततश्चाविधवा नारी वित्तं भोगान् लभेत सा॥

इति सावित्रीव्रतनिर्णयः॥

ब्रह्मपुराणे

ज्यैष्ठे शुक्लचतुर्थ्यां तु जाता पूर्वमुमा सती।
तस्मात् सा तत्र संपूज्या स्त्रीभिः सौभाग्यवृद्धये।
उपहारैश्च विविधैर्गीतनृत्यस्वरादिभिः॥

अथारण्यषष्ठीकृत्यम्॥

ज्यैष्ठे मासि सिते पक्षे षष्ठी चारण्यसंज्ञिता।
व्यजनैककरास्तस्यामटन्ति विपिने स्त्रियः॥

1. DC omits च. 3. VSP मदनपारिजात- for पारिजात-. SP omits -वचन-. DA omits इति (after अपि). DA omits च (after अत्र). 5. VSP च for तु. 6. Between ततश्चा- and -विधवा DD wrongly inserts "-व्याख्यानुसारित्वात्॥ अतएव कृष्णाष्टमी स्कन्दषष्ठी॥" 7. DA omits सावित्रीव्रतनिर्णयः. 8. DA inserts अथ before ब्रह्मपुराणे. 9. VSP मासि for शुक्ल-. 10. DC, DD तत्र तु for सा तत्र. 11. DB, DC, VSP उपचारैः for उपहारैः. DA तु for च. DA -वाद्यैः सुरादिभिः, DB -नृत्यैः स्वरादिभिः, AS -नृत्य-सुरादिभिः, SP -नृत्यैः सुरादिभिः for -नृत्यस्वरादिभिः. 12. DB अथ षष्ठी- for अथारण्यषष्ठी-. DA omits -कृत्यम्; DC, DD, SP -व्रतम् for कृत्यम्.

तां विन्ध्यवासिनीं स्कन्दषष्ठीमाराधयन्ति च।
कन्दमूलफलाहारा लभन्ते संततिं शुभाम्॥

तामिति

सुपां सुलुक् (अष्टाध्यायी ७.१.३९)

इत्यनेन तस्यामित्यर्थे साधु। कन्दं शूरणादि, मूलं तदितरमूलकादीति। अत्र तिथिद्वैधे युग्मादर एव॥

अथ दशहरा॥ तत्र ब्रह्मवैवर्तः

ज्यैष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता।
तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः॥
यां कांचित् सरितं प्राप्य दद्याद्दर्भतिलोदकम्।
मुच्यते दशभिः पापैः सुमहापातकोपमैः॥
दशमी ज्यैष्ठशुक्लस्य संवत्सरमुखी स्मृता।
हरते दश पापानि तस्माद्दशहरा स्मृता॥

2. AS ध्रुवाम् for शुभाम्. 4. DA, DC, DD, AS, SP सुप-, DB सुप् for सुलुक्. 5. DB, DC, DD, VSP साधुः. VSP कन्दः. DB शालूकादि, DC, DD सूरणादि for शूरणादि. DB तदितरमूलकादि (omitting इति), DC, DD, VSP तदितरमूलकादीनि, AS तदितरन्मूलकादीति, SP तदितरन्मूलकादीनि for तदितरमूलकादीति. DA, SP insert च after अत्र. 7. DC, DD, AS ब्रह्मवैवर्ते, VSP ब्रह्मपुराणे for तत्र ब्रह्मवैवर्तः. 8. AS ज्यैष्ठशुक्ल-. 10. DC, DD, SP, VSP दद्याद्दर्भै-(DC, DD-म्भै- for -र्भै-) स्तिलोदकम्. [Kv, p. 400 and Vk, p. 279 read दद्याद्दर्भतिलोदकम्, whereas in St I, p. 62 the reading दद्याद्दर्भैस्तिलोदकम् occurs]. 12. DB, DD दशमी शुक्लज्यैष्ठस्य, DC दशमी शुक्लपक्षस्य, SP ज्यैष्ठस्य शुक्लदशमी for दशमी ज्यैष्ठशुक्लस्य.

अनयोः केवलदशम्याः संवत्सरमुखीत्वबोधनान्नदीमात्रे तिलोदकतर्पणाङ्गकस्य स्नानस्य दशपापक्षयः फलं प्रतीयते। एवं दानस्यापि। अत्र भविष्योत्तरे विशेषः

ज्यैष्ठे मासि सिते पक्षे दशमी हस्तसंयुता।
हरते दश पापानि तस्माद्दशहरा स्मृता॥
ज्यैष्ठे शुक्लदशम्यां तु भवेद्भौमदिनं यदि।
ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः॥

अत्र हस्तानक्षत्रयोगे तिलोदकमन्तरेणापि स्नानाद्दशपापक्षयस्य कुजहस्तयोगे सर्वपापक्षयस्य चावगमात् केवलदशमी पुण्या, हस्तर्क्षयुता पुण्यतरा, भौमवार-हस्तर्क्षयुता पुण्यतमा। सर्वत्र गङ्गायामधिकं फलम्। तदुक्तं भविष्ये

ज्यैष्ठे शुक्लदशम्यां तु हस्तयोगेन जाह्नवी।
हरते दश पापानि तस्माद्दशहरा स्मृता॥

1-2. AS places all words from अनयोः केवलदशम्योः to भविष्योत्तरे विशेषः after तस्माद्दशहरा स्मृता in line 4. 1. DA तिलदर्भदानाङ्गकस्य स्नानस्य, DC, DD तिलोदकतर्पणाङ्गस्य स्नानस्य. AS तिलोदकतर्पणाङ्गकस्नानस्य, SP तिलतर्पणाङ्गकस्नानस्य, VSP तिलगर्भाङ्गकस्य स्नानस्य for तिलोदकतर्पणाङ्गकस्य स्नानस्य. 2. DB -पापक्षयफलं. VSP inserts इति after फलं. DA श्रूयते for प्रतीयते. 5. DA inserts भविष्ये before ज्यैष्ठे शुक्लदशम्यां. DA ज्यैष्ठशुक्ल-. 7. DA, SP तत्र for अत्र. AS omits स्नानात्. 7-11. SP omits all words from कुजहस्तयोगे to तस्माद्दशहरा स्मृता and reads instead : फलत्वं चावगम्यते. 7. DC, DD, AS, VSP कुजहस्तायोगे. 8. DA सर्वपापक्षयस्यावगमात्, DB सर्वपापस्य क्षयावगमात् for सर्वपापक्षयस्य चावगमात्. VSP inserts च after चावगमात्. DC, DD, VSP केवला दशमी for केवलदशमी. DA हस्तयुक्ता for हस्तर्क्षयुता. 8-9. DB भौमवारे हस्तर्क्षयुता, DC, DD भौमवारर्क्षयुता for भौमवारहस्तर्क्षयुता. 9. After पुण्यतमा DC, DD, AS insert इति केचित्. AS अधिकफलम् for अधिकं फलम्. 10. DC, DD, AS हस्तायोगेन.

तस्माज्ज्यैष्ठदशम्यां तु कुजहस्तासमागमे ।
गङ्गा स्वर्गादपावृत्य मर्त्यलोकमवातरत् ॥
दशजन्मकृतं पापं दश पापानि चैव हि ।
आवृणोत्यप्रयत्नेन तस्माद्दशहरा स्मृता ॥

तथा गाङ्गेयज्योतिर्निबन्धे

ज्यैष्ठे मासि क्षितिसुतदिने शुक्लपक्षे दशम्यां
हस्ते शैलान्निरगमदियं जाह्नवी मर्त्यलोकम् ।
पापान्यस्यां हरति हि तिथौ सा दशेत्याहुरार्याः
पुण्यं दद्यादपि शतगुणं वाजिमेधायुतस्य ॥

सा गङ्गा । अत्र स्नानकाले इदं पाठ्यम्

अदत्तानामुपादानं हिंसा चैवाविधानतः ।
परदारोपसेवा च कायिकं त्रिविधं स्मृतम् ॥
पारुष्यमनृतं चैव पैशुन्यं चापि सर्वशः ।
असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधम् ॥
परद्रव्येष्वभिध्यानं मनसानिष्टचिन्तनम् ।
वितथाभिनिवेशश्च मानसं त्रिविधं स्मृतम् ॥
एतानि दश पापानि प्रशमं यान्तु जाह्नवि ।
स्नातस्य मम ते देवि जले विष्णुपदोद्भवे ॥

1-4. DA omits all words from तस्माज्ज्यष्ठदशम्यां तु to तस्माद्दशहरा स्मृता. 1. SP केवला दशमी पुण्या for तस्माज्ज्यैष्ठदशम्यां तु. DB -हस्तसमागमे. 5-10. AS omits all words from तथा गाङ्गेयज्योतिर्निबन्धे to सा गङ्गा. 7. DC, DD, VSP निरगमयत् for निरगमत्. DB मर्त्यलोके. 8. VSP च for हि. 10. DA omits सा. SP इमं मन्त्रं पठेत् for इदं पाठ्यम्. 11. DA चैव विधानतः for चैवाविधानतः. 14. DB, DC, DD, AS असंबन्ध- for असंबद्ध-, 16. SP त्रिविधं कर्म मानसम् for मानसं त्रिविधं स्मृतम्. 17. VSP प्रणाशं for प्रशमं.

वराहपुराणे

यस्तिष्ठेदेकपादेन कुरुक्षेत्रे यशस्विनि।
वर्षाणामयुतं सप्त वायुभक्षो जितेन्द्रियः॥
ज्यैष्ठे मासि सिते पक्षे द्वादश्यां तु विशेषतः।
पुरुषोत्तममालोक्य ततोऽधिकफलं लभेत्॥

तथा

द्वादश्यां शुक्लपक्षे तु विशोका विष्णुना पुरा।
विभूषिता शुभैर्माल्यैस्तस्मात्तां तत्र पूजयेत्॥

विशोका लक्ष्मीः। तथा

ज्यैष्ठशुक्लचतुर्दश्यां पुष्पैश्चम्पकसंभवैः।
अर्चयित्वा महादेवं रुद्रलोके महीयते॥

ज्यैष्ठी पौर्णमासी मन्वन्तरादिः।

ज्यैष्ठे मासि तिलान् दत्वा पौर्णमास्यां विशेषतः।
अश्वमेधस्य यत् पुण्यं तद्वै प्राप्नोत्यसंशयम्॥

तथा विष्णुः (विष्णुस्मृति ९०.११)

ज्यैष्ठी ज्येष्ठायुक्ता चेत्तस्यां छत्रोपानत्प्रदानेन गणाधिपत्यमवाप्नोति।

2. DC, AS, SP, VSP यस्तिष्ठत्येकपादेन. 3. DB, DC, DD वायुभक्ष्यो. 7-9. AS, SP, VSP place all words from द्वादश्यां शुक्लपक्षे तु to विशोका लक्ष्मीः after रुद्रलोके महीयते in line 11. 9. DB, AS omit तथा. 10. DC, AS, SP ज्यैष्ठे शुक्ल-. VSP -संज्ञितैः for -संभवैः. 12. DB ज्यैष्ठपौर्णमासी. AS, SP, VSP insert च after ज्यैष्ठी. 14. SP तद्धि for तद्वै. 16. VSP चतुर्दश्यां for चेत्तस्यां. DB -पानहप्रदानेन, VSP -पानद्दानेन. 17. VSP गाणपत्यम् for गणाधिपत्यम्. DB आप्नोति, SP प्राप्नोति for अवाप्नोति. DC, DD, AS, SP insert इति after अवाप्नोति.

ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्तिता॥

ऐन्द्रं ज्येष्ठा। प्राजापत्यं रोहिणी। इयं चानुराधायां गुरावपि स्यात्। यथा ज्योतिषे

ऐन्द्रे मैत्रे यदा जीवस्तत्पञ्चदशके रविः।
पूर्णिमा वृश्चिके चन्द्रे महाज्यैष्ठी प्रकीर्तिता॥

मैत्रमनुराधा। तथाह व्याघ्रः

ऐन्द्र ऋक्षेऽथवा मैत्रे गुरुचन्द्रौ यदा स्थितौ।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्तिता॥

एताभ्यां विना गुरुवारेणापीति प्रतीयते। केवलं ज्येष्ठानक्षत्रयुक्ता यदि ज्यैष्ठी पूर्णिमा संवत्सरे स्यात्तदापि महाज्यैष्ठी भवति। यथा राजमार्तण्डे

संवत्सरे यदि स्यात्तु ज्यैष्ठमासस्य पूर्णिमा।
ज्येष्ठाभेन समायुक्ता महाज्यैष्ठी भवेत्तदा॥

संवत्सरश्च युगारम्भकः प्रथमो वत्सर इत्यब्दनिरूपणे प्रागुक्तमेव।

2. DA -वारे च for -वारेण. 3. DB, AS, VSP ऐन्द्री for ऐन्द्रं. DC, DD गुरोरपि. DA, DB, AS तथा for यथा; VSP omits यथा. 7. DA, AS तथा for तथाह. 8. DA ऐन्द्रे मैत्रे तथा ऋक्षे, DB ऐन्द्रे ऋक्षेऽथ मैत्रे च, AS ऐन्द्र ऋक्षे तथा मैत्रे for ऐन्द्र ऋक्षेऽथवा मैत्रे. 10. DC, DD omit इति. DB, AS, SP insert अपि after इति. DA, DC केवलज्येष्ठा- for केवलं ज्येष्ठा-. 10-13. DD haplologically omits all words from ज्येष्ठानक्षत्रयुक्ता to ज्येष्ठाभेन समायुक्ता महा-. 11. VSP inserts अपि after संवत्सरे. VSP इति for भवति. AS तथा for यथा. DB मार्कण्डेयः for राजमार्तण्डे. 12. [ Raghunandana prefers the reading 'ज्यैष्ठे संवत्सरे चैव' to the reading 'संवत्सरे यदि स्यात्तु' which he calls kālpanika. See St I, pp. 134, 507 and 764-5 ]. 13. VSP प्रकीर्तिता for भवेत्तदा. 14. VSP युगारम्भकप्रथमो. DA उक्तम् for प्रागुक्तमेव.

भविष्ये

महाज्यैष्ठ्यां तु यः पश्येत् पुरुषः पुरुषोत्तमम् ।
सोऽपि सद्गतिमाप्नोति मोक्षं गङ्गाम्बुमज्जनात् ॥

तथा

महाज्यैष्ठ्यां तु संदृश्य पुरुषः पुरुषोत्तमम् ।
परावरान् समुद्धृत्य न भूयः पुरुषो भवेत् ॥
महाज्यैष्ठ्यां नरो दृष्ट्वा प्रयतः पुरुषोत्तमम् ।
ऊर्ध्वध्वजांशुकं सर्वान् पितॄंस्तारयतेऽचिरात् ॥

इति ॥

## अथाषाढकृत्यनिर्णयः ॥

तत्र सौराषाढे कियन्न्यूनसप्तदिवसोपरिदशदिनपर्यन्तं पृथ्वी रजस्वला । तच्चाम्बुवाचीसंज्ञम् । तत्र भूकर्षणवीजवपनादि न कार्यम् । तथा ज्योतिःशास्त्रे

मृगशिरसि निवृत्ते रौद्रपादेऽम्बुवाची
ॠतुमती खलु पृथ्वी वर्जयेत्त्रीण्यहानि ।

1. DA omits भविष्ये. 5. VSP यः पश्येत् for संदृश्य. 7. AS पुरुषोत्तमे. 8. DB, AS, SP, VSP ऊर्ध्वं ध्वजांशुकं. 9. DA, AS omit इति. 10. DA -कृत्यम् for -कृत्यनिर्णयः. 11. VSP अत्र for तत्र. DA आषाढसौरे, DD आषाढे, AS, VSP सौराषाढ- for सौराषाढे. DA -दिनो- for दिवसो-. DB पृथिवी for पृथ्वी. 12. DC, DD -संज्ञकम् for -संज्ञम्. AS, SP -वापादि for -वपनादि. DC, DD कर्तव्यम् for कार्यम्. DA ज्योतिषे for ज्योतिःशास्त्रे. 14. DA, DB, DC, DD, AS, SP, VSP ऋतुमति. [Sp, fol. 11b reads ऋतुमती but St I, pp. 56 and 814 have ऋतुमति].

यदि वपति कृपाणः क्षेत्रमासाद्य बीजं
न भवति फलयोगः शस्यचाण्डालपाकः ॥

एतद्दिनत्रयं यावद्वेदोऽपि नाध्येयः ।

द्वावेव वर्जयेन्नित्यमस्वाध्यायौ प्रयत्नतः ।
स्वाध्यायभूमिं चाशुद्धामात्मानं चाशुचिं द्विजः ॥

इति मनुवचनात् (४.१२७)। तथा

आर्द्रायाः प्रथमे पादे क्षीरं पिबति यो नरः ।
अपि रोषान्वितस्तस्य तक्षकः किं करिष्यति ॥

तथा गारुडतन्त्रे

मिथुनस्थेऽर्के तण्डुलजलेन शिरीषमूलपानं सर्पभयहृत्

इति । तथा, आर्द्रास्थे रवौ सकृदवश्यं पार्वणविधिना श्राद्धं कर्तव्यम् ।

नवोदके नवान्ने च गृहप्रच्छादने तथा ।
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च ॥
तस्माद्दद्यात् सदा युक्तो विद्वत्सु ब्राह्मणेषु च ॥

इति शातातपवचनात् । नवोदके वर्षोपक्रमे । स चार्द्रास्थे रवौ । तथा रुद्रयामले

1. DA क्षत्रमध्ये च for क्षेत्रमासाद्य. 2. DC, DD, VSP फलभोगी for फलयोगः. DA -चण्डाल योग इति for -चाण्डालपाकः. 3. SP omits यावत्. AS inserts तावत् after यावत्. VSP omits अपि. DA नाध्येतव्यः for नाध्येयः. 9. DA, DC, DD गरुडतन्त्रे, DB गारुडेन्द्रे for गारुडतन्त्रे. 11. DB omits इति. DC, DD, SP आर्द्रास्थरवौ. DA, DC, DD कार्य्यम् for कर्तव्यम्. 12. AS -प्रच्छादनेषु च for -प्रच्छादने तथा. 14. AS, VSP omit the entire line तस्माद्दद्यात् etc. DB, DC सदोद्युक्तो for सदा युक्तो. 15. After -वचनात् DA inserts a few words of which the last three syllables (नित्यत्वं) only are ligible. 15. VSP omits स च. DA, DC, DD चार्द्रास्थरवौ. DA यथा for तथा. DA, DB, DC, DD, VSP रुद्रजामले.

प्रावृट्काले सिते पक्षे रौद्रऋक्षगते रवौ।
नाडीवेधसमायोगे जलयोगं वदाम्यहम् ॥

इति। ब्रह्मपुराणे

आषाढे शुक्लसप्तम्यां विवस्वान् नाम भास्करः।
जातः पूर्वासु तस्मात्तं तत्रोपोष्य यजेत् सदा ॥

एतदनन्तरं शुक्लदशमी मन्वन्तरादिः ॥

अथ हरिशयनम् ॥

मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्तते च।
पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेन ॥

मैत्रमनुराधा, वैष्णव्यं श्रवणा, पौष्णं रेवती।

निशि स्वापो दिवोत्थानं संध्यायां परिवर्तनम्।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥

इत्थं च पादयोगप्राप्तौ फलातिशय इति ज्ञेयम्।

ॐ नमो नारायणाय

इत्युक्त्वा

ॐ पश्यन्तु मेघा अपि मेघश्यामं
द्युमागतां सिच्यमानां महीमिमाम्।

1. SP समायाते for सिते पक्षे. 3. DA omits इति. 4. AS, SP आषाढशुक्लसप्तम्यां. 5. VSP तत् स्नानं for तस्मात्तं. VSP तत्रोपास्य for तत्रोपोष्य. 6. SP तदनन्तरं. 8. DA मैत्रादिपादे. 10. DC, DD वैष्णवी for वैष्णव्यं. AS omits वैष्णव्यं श्रवणा. 12. AS, SP, VSP तु for अपि. 13. DB पादयोगे प्राप्तौ. 15. SP इत्युच्चार्य्य स्थापयेत् for इत्युक्त्वा. 16. DA, DC, DD, VSP मेघान्यपि for मेघा अपि. [ Sp, fol. 11b, Vk, p. 288, St I, p. 113 and II, pp. 102 and 436 read मेघान्यपि ]. DD घोर-(?) for मेघ-. 17. DA, DC, DD, AS द्यु मागतं, SP उपागतं, VSP द्यु पागतं for द्यु मागतां. DB सिच्यमाना, VSP सिच्यमानं for सिच्यमानां.

निद्रां भगवान् गृह्णातु लोकनाथ
वर्षाखिमं पश्यतु मेघवृन्दम् ॥

इति मन्त्रेण कृष्णं स्वापयेत्। ततः

ॐ सुप्ते त्वयि जगन्नाथ जगत् सुप्तं भवेदिदम्।
विबुद्धे त्वयि बुध्येत जगत् सर्वं चराचरम् ॥

इति मन्त्रेण पूजयेत्। यमः

क्षीराब्धौ शेषपर्यङ्के आषाढ्यां संविशेद्धरिः।
निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा ॥
उपवासैश्च किं तस्य यज्ञैरन्यैर्महात्मनः।
सुस्वापे च प्रबोधे च पूजितो येन केशवः ॥

अत्राषाढ़ी कार्त्तिकी चैकादशी ग्राह्या ॥

अथ चातुर्मास्यव्रतविधिः ॥

आषाढ़स्य सिते पक्षे एकादश्यामुपोषितः।
चातुर्मास्यव्रतानां तु कुर्वीत परिकल्पनम् ॥

1. DA इमां, DC भवान् for भगवान्. 2. DA, DB, AS, VSP वर्षामिमां, DD वर्षाखिमां for वर्षाखिमं · [ The reading वर्षाखिमं is found in Sp, fol. 11b, Vk, p. 288, St I, p. 113 and II, pp. 102 and 436, and so on]. 3. DA omits मन्त्रेण. DA स्थापयेत्, VSP स्नापयेत् for स्वापयेत्. DB, SP, VSP insert च after ततः. 4. DC, DD, SP, VSP जगन्नाथे. 7. DB -पर्यङ्कमाषाढ्यां. 9. DD यज्ञो वन्यैः (?) for यज्ञैरन्यैः. DC, DD यतात्मनः for महात्मनः. 10. DB, AS, SP प्रस्वापे for सुस्वापे. 11. DB, DD तत्र for अत्र; VSP omits अत्र. DA, DC omit च ( after कार्त्तिकी ). DA द्वादशी च for एकादशी ; AS omits एकादशी. 12. VSP अत्र for अथ. 14. DA, VSP च for तु.

नारदीये

एकादश्यां तु गृह्णीयात् संक्रान्त्यां कर्कटस्य वा ।
आषाढ्यां वा नरो भक्त्या चातुर्मास्यव्रतक्रियाम् ॥
चातुर्मास्यव्रतं कुर्याद् यत्किंचिदवनीपते ।
नान्यथा वार्षिकं पापं विनिहन्ति प्रयत्नतः ॥
वार्षिकांश्चतुरो मासान् यो नयेद् येन केनचित् ।
व्रतेन स पदं विष्णोः श्वेताख्यं याति मानवः ॥
वार्षिकांश्चतुरो मासान् यो मांसं नात्ति मानवः ।
चत्वारि भद्राण्याप्नोति कीर्तिमायुर्यशो बलम् ॥
आषाढादिचतुर्मासान् प्रातःस्नायी भवेन्नरः ।
विप्राय भोजनं दत्त्वा कार्तिक्यां गोप्रदो भवेत् ।
स वैष्णवपुरं याति विष्णुव्रतमिदं महत् ॥

विष्णुमभ्यर्च्य तदग्रे मन्त्राभ्यां व्रतं गृह्णीयात् ।

इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नां सिद्धिमाप्नोतु प्रसादात्तव केशव ॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे म्रियाम्यहम् ।
तन्मे भवतु संपूर्णं त्वत्प्रसादाज्जनार्दन ॥

1. VSP omits नारदीये. 2. AS, SP, VSP च for तु. DA च for वा. 3. DB, VSP चातुर्मासीव्रत-, AS चतुर्मासीव्रत- for चातुर्मास्यव्रत-. 6. AS omits the entire line वार्षिकांश्चतुरो etc. haplologically. 10. DB, AS, SP, VSP आषाढ्यादिचतुर्मासान्. [10-12. The three lines आषाढादिचतुर्मासान् etc. are the same as Bhaviṣya-p. IV. 121, 72-3 and Matsya-p. 101. 37]. 12. DB वैष्णवं पुरं. 15. DA, DC, DD, VSP आप्नोति for आप्नोतु. DD तु for तव. 16. SP, VSP त्वहं म्रिये. [The reading म्रियाम्यहम् is found in Kv, Vk etc., whereas St has the grammatically correct reading त्वहं म्रिये].

मत्स्यपुराणे

चतुरो वार्षिकान् मासान् देवस्योत्थापनावधि ।
स्त्री वा नरो वा मद्भक्तो धर्मार्थं सुदृढव्रतः ॥
गृह्णीयान्नियमानेतान् दन्तधावनपूर्वकम् ।
तेषां फलानि वक्ष्यामि तत्कर्तॄणां पृथक् पृथक् ॥
मधुस्वरो भवेन्नित्यं नरो गुडविवर्जनात् ।
तैलस्य वर्जनादेव सुन्दराङ्गः प्रजायते ॥
कटुतैलपरित्यागाच्छत्रुनाशः प्रजायते ।
योगाभ्यासी भवेद् यस्तु स ब्रह्मपुरमाप्नुयात् ॥
ताम्बूलवर्जनाद् भोगी रक्तकण्ठश्च जायते ।
घृतत्यागात् सुलावण्यं सर्वं स्निग्धं वपुर्भवेत् ॥
फलत्यागात्तु मतिमान् बहुपुत्रश्च जायते ।
शाकपत्राशनाद् भोगी पक्वान्नादोऽमलो भवेत् ॥

1. DA मात्स्ये for मत्स्यपुराणे. [2ff. The verses चतुरो वार्षिकान् मासान् etc., which have been ascribed to the Matsya-p. but are not found in the present Matsya, are the same as Bhaviṣya-p. IV (उत्तरपर्वन्, which is the generally the same as the भविष्योत्तरपुराण mentioned and drawn upon in the Nibandhas etc.). 70. 12-15a, 16b, 18-20a, 21a, 22-23, 24b-29 and 33-36a (three lines from नक्तंभोजी समग्रं तु on p. 171 being not found). As a matter of fact, these verses, which are found quoted as from the भविष्योत्तरपुराण in works such as the Varṣa-kaumudī (pp. 290-291), really belong to the Bhaviṣyottara as the word पार्थ used in the Vocative Case (on p. 171, lines 3 and 10) shows. It is to be noted that in the उत्तरपर्वन् of the Bhaviṣya-p. Kṛṣṇa speaks to Yudhiṣṭhira]. 3. DB, DC, DD सुदृढव्रतम्. 5. त्वत्कर्तॄणां. 6. DC, DD मधुरस्वरो. 9. DC, DD योगाभ्यां संभवे (रे ?)द् यस्तु for योगाभ्यासी भवेद् यस्तु. DA ब्रह्मपर-, DB, SP ब्रह्मपद- for ब्रह्मपुर-. 10. DC, DD -कण्ठः प्रजायते. 11. DD सर्वस्निग्धं. 12. AS, VSP -पुत्रः प्रजायते 13. DC, DD पक्वान्नदोऽमलो भवेत्, AS पक्वान्नादमनो भवेत् (corrupt), SP पक्वान्नादोऽमरो भवेत् for पक्वान्नादोऽमलो भवेत्. [Bhaviyṣa-p. IV. 70. 19b reads अपक्वादो- for पक्वान्नादो-].

पादाभ्यङ्गपरित्यागाद्वपुः सौरभ्यमाप्नुयात् ।
दधिदुग्धतक्रनियमाद् गोलोकं लभते नरः ॥
लभते संततिं दीर्घां स्थालीपक्वमभक्षयन् ।
भूमौ स्वस्तरशायी च विष्णोरनुचरो भवेत् ॥
सदा मुनिः सदा योगी मधुमांसस्य वर्जनात् ।
निर्व्याधिर्नीरुगोजस्वी विष्णुभक्तश्च जायते ॥
एकान्तरोपवासेन विष्णुलोकमवाप्नुयात् ।
धारणान्नखलोम्नां च गङ्गास्नानं दिने दिने ॥
मौनव्रती भवेद् यस्तु तस्याज्ञास्खलिता भवेत् ।
भूमौ भुङ्क्ते नरो यस्तु स पृथिव्याः पतिर्भवेत् ॥
नमो नारायणायेति जप्त्वानशनजं फलम् ।
पादाभिवन्दनाद्विष्णोर्लभेद् गोदानजं फलम् ॥
विष्णुपादाम्बुजस्पर्शात् कृतकृत्यो भवेन्नरः ।
विष्णोर्देवकुले कुर्यादुपलेपनमार्जने ।
कल्पस्थायी भवेत्तत्र स नरो नात्र संशयः ॥
प्रदक्षिणशतं यस्तु कुरुते स्तुतिपाठकः ।
हंसयुक्तविमानेन स वैष्णवपुरं व्रजेत् ॥

1. SP सौरभ-, VSP सौभाग्य- for सौरभ्य-. 3. DC, DD, AS, SP, VSP स्थालीपाक- (DD -क्ष- for -क-) म् for स्थालीपक्वम्. [In St I, p. 111 and II, p. 435 the reading स्थालीपाकम् is found. Bhaviṣya-p. IV. 70. 22a reads तापपक्वस्य भक्षणात् for स्थालीपक्वमभक्षयन्]. 4. DA संस्तर-, DB प्रस्तर- DC सुस्तर-, AS, SP श्रस्तर- for स्वस्तर-. [Bhaviṣya-p. IV. 70. 22b reads भूमावस्तरशायी for भूमौ स्वस्तरशायी]. 5. DA, SP -मांसविवर्जनात्. 6. DC, DD -भक्तः प्रजायते. 9. SP मौनी स्नायी for मौनव्रती. 10. DA भौमं for भूमौ. DB transposes नरो and यस्तु. 12. DB omits the entire line पादाभिवन्दनात etc. 13. DA- स्पर्शे for -स्पर्शात्. 14. SP देवालये for देवकुले. 15. DA कल्पस्नायी. 16. DB प्रदक्षिणशतैः, SP प्रदक्षिणं शतं for प्रदक्षिणशतं. DC, DD, क्रियते for कुरुते. 17. DA स वैष्णवं पुरं व्रजेत्, DB विष्णुपुरं स गच्छति for स वैष्णवपुरं व्रजेत्.

कृत्वा प्रेक्षणकं दिव्यं स्थानमाप्सरसं लभेत् ।
नक्तभोजी समग्रं तु तीर्थयात्राफलं लभेत् ॥
पञ्चगव्याशनात् पार्थ चान्द्रायणफलं लभेत् ।
एकभक्ताशनान्नित्यमग्निहोत्रफलं लभेत् ॥
अयाचितेन चाप्नोति वापीकूपप्रपाफलम् ।
षष्ठकालान्नभोगेन स्वर्गस्थायी नरो भवेत् ॥
पत्रेषु यो नरो भुङ्क्ते कुरुक्षेत्रफलं लभेत् ।
शिलायां भोजने नित्यं प्रयागस्नानजं फलम् ॥
मासद्वयपरित्यागान्न रोगैः परिभूयते ।
एवमादिव्रतैः पार्थ तुष्टिमायाति केशवः ॥

आषाढ़ी पौर्णमासी मन्वन्तरादिः ॥

## अथ श्रावणकृत्यनिर्णयः ॥

कात्यायनः

यव्यद्वयं श्रावणादि सर्वा नद्यो रजस्वलाः ।
तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगाः ॥
(कात्यायनस्मृति १०.५)

1. DA, VSP प्रेक्ष्णणकं (?), SP नर्तनकं for प्रेक्षणकं. DB नित्यं for दिव्यं. DB, DD, VSP व्रजेत् for लभेत्. 2. DA नक्तं भोगी, DC, DD, SP, VSP नक्तं भोजी. SP सदा यस्तु for समग्रं तु. 3. AS तीर्थयात्राफलं for चान्द्रायणफलं. 5. AS वाप्नोति. 6. DA षष्ठकालार्थभोगेन, DB षष्ठकालानुभोगेन, AS अष्टकालान्नभोगेन. VSP transposes नरः and भवेत्. 8. DB, DC, DD, SP भोजिनो, VSP भोजनात् for भोजने. [Bhaviṣya-p. IV. 70. 35a reads भोजनात्]. 9. SP माष- for मास-. 10. After line 10 DA inserts : "शयन्यामारम्भे बोधन्यां समाप्तिः देवस्योत्थापनावधीत्येतद्विषयम्। आषाढ्यामारम्भे कार्त्तिक्यां समाप्तिः कार्त्तिक्यां गोप्रदो भवेदित्येतद्विषयम्। कर्कटसंक्रान्त्यां समाप्तिर्ज्ञेया चतुरो मासानिति श्रुतेरित्याहुः।" 12. DA -कृत्यम् for -कृत्यनिर्णयः. 15. DA प्रकुर्वीत for न कुर्वीत. DB सुरापगाम् for समुद्रगाः.

यव्यो मासः। अयं च सौरः। तथा चात्रिः

सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः।
न स्नानादीनि कर्माणि तासु कुर्वीत मानवः॥

अत्र तास्विति ग्रहणाज्जलमुद्धृत्य स्नानादावदोष इति धनंजयादयः। समुद्रगाश्च साक्षात्, अन्यथान्यावर्तकत्वात्। नदीलक्षणमुक्तं छन्दोगपरिशिष्टे

धनुःसहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्तास्ताः परिकीर्तिताः॥

(कात्यायनस्मृति १०.६) इति। धनुर्हस्तचतुष्टयम्। तथा

विपाशादित्यदुहिता गङ्गा वै गोमती तथा।
रजसा न प्रदुष्यन्ति ये चान्ये नदसंज्ञकाः॥

यत्तु

आदौ कर्कटके देवी त्र्यहं यावद् रजस्वला।
चतुर्थेऽहनि संप्राप्ते शुद्धा भवति जाह्नवी॥

4. DA श्रवणात् for ग्रहणात्. DC, DD, AS, SP, VSP न दोषः for अदोषः. After धनंजयादयः DB, DC, SP insert : वस्तुतस्तु रजस्वला इति हेतूपन्यासाज्जलमात्रस्यैवानुप- (DC -प्र- for -प-) योगोऽव- (SP omits अव-) गम्यते इति युक्तम्. DB समुद्रगा for समुद्रगाः. DC, DD, VSP omit च. 7. DA, DB, DC, DD, AS, VSP (after correction) गर्तास्ते for गर्तास्ताः. [The reading गर्तास्ते is found in Gobhila-smṛti (1. 142), Kv, p. 285, Acom., pp. 135, 234, Vk, p. 293, etc., whereas गर्तास्ताः occurs in Kātyāyana-saṃhitā, Kātyāyana-smṛti, Kcom. (on Manu-smṛti 4. 203), Sc II. p. 333, St I, pp. 153, 367, and so on]. 8. DA, VSP omit इति. 9. DA विपाशादित्यत्वविहिता (corrupt), DB विपाशादित्वहिता (corrupt) for विपाशादित्यदुहिता. DC, DD, AS गोतमी for गोमती. 10. AS, SP, VSP insert इति after नदसंज्ञकाः. 12. DB च कर्कटे for कर्कटके. SP गङ्गा for यावत्. DB रजस्वलाः.

इति तद्रजोयोगमात्रं बोधयति, न तु स्नानादिनिषेधम्। अतएव निगमः

गङ्गा धर्मद्रवी पुण्या यमुना च सरस्वती।
अन्तर्गतरजोयोगे सर्वाहःस्वेव निर्मलाः॥

त्र्याहिकरजोयोगस्तु नीराजनाद्यर्थ इति शङ्खधरः। रजोदोषापवादान्तरमुक्तं छन्दोगपरिशिष्टे

उपाकर्मणि चोत्सर्गे प्रेतस्नाने तथैव च।
चन्द्रसूर्यग्रहे चैव रजोदोषो न विद्यते॥
(कात्यायनस्मृति १०.७)

अथाशून्यशयना॥ भविष्योत्तरे (भविष्यपुराण ४.१५.४-७)

अशून्यशयनां नाम द्वितीयां शृणु भारत।
यामुपोष्य तु वैधव्यं स्त्री न याति नराधिप॥

1. DA तत्र योगमात्रं DC, DD तद्रजोयोगं, VSP इत्यत्र योगमात्रं for तद्रजोयोगमात्रं. DA स्नानमात्रं निषेधं, DB स्नानादिनिषेधविषयम्, DC, DD, AS, SP, VSP स्नानादिनिषेधः for स्नानादिनिषेधम्. [St. I, p. 498, which quotes the entire extract from यत्तु आदौ कर्कटके देवी (on p. 172, line 11ff.) to इति शङ्खधरः in line 4 above, reads स्नानादिनिषेधकम् for स्नानादिनिषेधम्]. 3. DA, AS निर्मला for निर्मलाः. [St I, p. 498, which quotes the entire extract from line 11 on p. 172 to line 3 above, reads निर्मलाः. For the reading चामलाः for निर्मलाः see Acom., p. 236, Sc II, p. 342, Mp, p. 251, and so on]. 4. DA रजोदोषान्तरमुक्तं. 6. DB, DC, DD, AS, SP, VSP -श्राद्धे for -स्नाने. [For the reading प्रेतस्नाने see Kv, p. 280, Acom., p. 135, Mp, p. 252, Śd-k, p. 325, St I, pp. 153, 367, II. p. 334, Kātyāyana-smṛti, and so on]. DD omits all words from तथैव च to श्रिया सार्धं (on p. 174, line 2). 7. AS, SP insert इति after विद्यते. 9ff. Alhough AS omits all words from अथाशून्यशयना to श्रावणे मासि भारत (on p. 174, line 3) here and inserts them after युग्मवचनात् (on p. 175, line 12), it indicates with signs that these words should be placed here. 9. VSP omits भविष्योत्तरे. 11. VSP transposes स्त्री and न. VSP कदाचन for नराधिप.

पत्नीवियुक्तश्च नरो न कदाचित् प्रजायते।
शेते जगत्पतिः कृष्णः श्रिया सार्धं यदा नृप।
कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत ॥

अथ मनसापञ्चमी ॥

सुप्ते जनार्दने कृष्णपञ्चम्यां भवनाङ्गने।
पूजयेन्मनसादेवीं स्नुहीविटपसंस्थिताम् ॥
( भविष्यपुराण २.२.८.१९-२० )

मनसादेवी विषहरी, स्नुही सिजः।
तथा ( भविष्यपुराण २.२.८.२०-२१ )

पिचुमर्दस्य पत्राणि स्थापयेद्भवनोदरे।
स्वयं चापि तदश्नीयाद्भोजयेद् ब्राह्मणानपि ॥
पूजयित्वा नरो देवीं न सर्पभयमाप्नुयात् ॥

इयं च पञ्चमी पौर्णमास्यन्तश्रावणमासीया।

सुप्ते जनार्दने ( भविष्यपुराण २.२.८.१९ )

1. DA पत्नीयुक्तश्च (obviously omitting a syllable वि before -युक्तश्च), SP पत्नीविमुक्तश्च. VSP कदापि च जायते for कदाचित् प्रजायते. 2. After this line (2) DC, DD insert : अशून्यशयना नाम तदा ग्राह्या हि सा तिथिः. [For this line अशून्यशयना नाम etc. see Bhaviṣya-p. IV. 15. 6]. 5. DC, DD, AS, SP, VSP कृष्णे पञ्चम्यां for कृष्णपञ्चम्यां. [The Bhaviṣya-p. reads कृष्णपञ्चम्यां]. 6. SP -विटपि- for -विटप-. After स्नुहीविटपसंस्थिताम् DB, SP insert : देवीं संपूज्य नत्वा च न सर्पभयमाप्नुयात् (Bhaviṣya-p. II. ii. 8. 21a). 8. DA omits all words from मनसादेवी to सिजः. DB मनसादेवीं विषहरीं for मनसादेवी विषहरी. After विषहरी VSP inserts प्रसिद्धा. SP omits स्नुही सिजः. DC, DD सिउ( त ? )-जः for सिजः. DB inserts इति ख्याते, DC इति यस्य प्रसिद्धिः and VSP इति ख्यातः after सिजः. 11. VSP ब्राह्मणांश्चैव भोजयेत् for भोजयेद्ब्राह्मणानपि. 12. सर्पाद्भय-. DD, AS, VSP insert इति after आप्नुयात्.

इत्यनेनापाढ्यन्तरितत्वात्। तदुक्तं भविष्ये (१.३६.६७-६९ ; १.३२.३-४। तथा, २.२.८.१७-१९ ; ४.३६.३-४)

श्रावणे मासि पञ्चम्यां कृष्णपक्षे नराधिप।
द्वारस्योभयतो लेख्या गोमयेन विषोल्वणाः॥
पूजयेद्विधिवद्वीर दधिदूर्वाङ्कुरैः कुशैः॥
पञ्चम्यां स्नापयन्तीह नागान् क्षीरेण ये नराः।
तेषां कुले प्रयच्छन्ति न भयं प्राणदक्षिणाः॥

लेख्यान् नागानाह

वासुकिस्तक्षकश्चैव कालियो मणिभद्रकः।
ऐरावतो धृतराष्ट्रः कर्कोटकधनंजयौ॥

(भविष्यपुराण १.३२.२ ; ४.३६.२) इति। अत्र च दिनद्वये पूर्वाह्णलाभेन संशये पूर्वदिनमेवाङ्गम्, युग्मवचनात्।

एतदन्तरितकृष्णाष्टमी मन्वन्तरादिः।

तथा मरीचिः

मासे नभस्यमावास्या तस्यां दर्भचयो मतः।
अयातयामास्ते दर्भा विनियोज्याः पुनः पुनः॥

1. DA आषाढ्यनन्तरितत्वाभिधानात्, DB आषाढान्तरितत्वात्, AS, VSP आषाढ्यनन्तरितत्वात् for आषाढ्यन्तरितत्वात्. 5. DB, AS धीर, VSP क्षीर for वीर. 6. DC, DD इति for इह. 7. ṢP अभयं for न भयं. DA -भक्षकाः for -दक्षिणाः. 8. Before लेख्यान् DC, DD insert : विषोल्वणा नागाः. 9. DB, AS, SP, VSP कालीयो. 10. DB inserts च after धृतराष्ट्रः. 11. DA, VSP omit इति. DA omits च. DB, VSP -लाभे for -लाभेन. 12. DA -दिनमेवाङ्गी, DB -दिन एव. VSP -दिन एवाङ्गम् for दिनमेवाङ्गम्. 13. DA एतदनन्तरं च कृष्णाष्टमी, DB एतदन्तरिता कृष्णाष्टमी. DC, DD, AS, SP, VSP एतदनन्तरितकृष्णाष्टमी. DB, DC, DD, AS, VSP insert च after कृष्णाष्टमी. 14. DC, DD insert च after तथा 16. AS अजातयामा-. After पुनः पुनः DB, AS insert इति.

# अथ भाद्रकृत्यनिर्णयः ॥

तत्र श्रावण्यन्तरितकृष्णाष्टमी कृष्णजन्माष्टमी। यथा भविष्योत्तरे (भविष्यपुराण ४.५५. १५-१६, २१)

सिंहराशिगते सूर्ये गगने जलदाकुले।
मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्धरात्रके ॥
शशाङ्के वृषराशिस्थे नक्षत्रे रोहिणीयुते।
वसुदेवेन देवक्यामहं जातो जनाः स्वयम् ॥
पार्थ तद्दिवसे प्राप्ते दन्तधावनपूर्वकम्।
उपवासस्य नियमान् गृह्णीयाद्विधिपूर्वकम् ॥

तथा ब्रह्मपुराणे

अथ भाद्रपदे मासि कृष्णाष्टम्यां कलौ युगे।
अष्टाविंशतिमे जातः कृष्णोऽसौ देवकीसुतः ॥
भारावतारणार्थाय क्षत्रियाणां वधाय च।
तस्मात् स तत्र संपूज्यो यशोदा देवकी तथा ॥

अत्र

सिंहराशिगते (भविष्यपुराण ४.५५.१५)

इत्यभिधानात् सौरभाद्र एवैतद्व्रतमिति बहवः। तन्न।

1. DA -कृत्यम् for -कृत्यनिर्णयः. 2. DB omits तत्र. DA श्रावणान्तरित-, AS, VSP श्रावण्यनन्तरित-. DC omits कृष्णजन्माष्टमी; DD, AS, SP, VSP जन्माष्टमी for कृष्णजन्माष्टमी DB, DC, DD, VSP तथा for यथा. DB inserts च after यथा. 4. SP -राशिं गते VSP जलदालये for जलदाकुले. 7. DB, DC, VSP जनः for जनाः. After जनाः स्वयम् DA inserts: "एकेनैवोपवासेन कृतेन कुरुनन्दन। सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः॥" 9. VSP भक्तिभावतः for विधिपूर्वकम्. 10. DD, AS, SP VSP insert अपि after ब्रह्मपुराणे. 15. DC, DD तत्र, VSP अथ for अत्र. 16. SP सिंहराशिं गते. 17. SP सौरभाद्रव्रतमिति for सौरभाद्र एवैतद्व्रतमिति.

सिंहराशिगते (भविष्यपुराण ४.५५.१५)

इत्यनेनैव प्राप्तौ

मासि भाद्रपदे (भविष्यपुराण ४.५५.१५)

इत्यस्य वैयर्थ्यापत्तेः। भाद्रपदस्य च मुख्यत्वाद् दर्शान्तपरत्वम् इत्यपि न। पौर्णमास्यन्तमासस्यैव सकलतिथिकृत्याङ्गतया ब्रह्मपुराणादाववगमात्, तथा

प्रावृट्काले च नभसि कृष्णाष्टम्यामहं निशि।
उत्पत्स्यामि नवम्यां च प्रसूतिं त्वमवाप्स्यसि॥

इति विष्णुपुराणवचने (५.१.७६), तथा

प्रेतयोनिगतानां तु प्रेतत्वं नाशितं तु तैः।
यैः कृतं श्रावणे मासि कृष्णजन्माष्टमीव्रतम्॥

इति ब्रह्मवैवर्तवचने च नभःपदश्रावणपदोपादानात्तदेकवाक्यतया भाद्रपदस्य पौर्णमास्यन्तत्वावधारणाच्च। न चासौ सौरभाद्रे नियता, कृष्णनवम्यादौ सिंहसंक्रमणे सौरश्रावणेऽपि संभवात्। न च तथापि तत्र "सिंहराशिगते" (भविष्यपुराण ४.५५.१५) इत्यनेन सूर्यविशेषणाद्विशिष्टविधिरेवास्त्विति वाच्यम्। एवंविधयोगे

1. SP -राशिं गते. 2. DB, SP omit एव. 4. VSP inserts अत्र before भाद्रपदस्य. DB, DC, DD, AS, SP, VSP भाद्रपदशब्दस्य for भाद्रपदस्य. DC, DD, SP omit च; VSP न for च. DC वचनमुख्यत्वात् for मुख्यत्वात्. DB inserts न (after मुख्यत्वात्). VSP दर्शान्तमासपरत्वम्. DB, DC, DD, AS, SP, VSP omit इत्यपि न (after दर्शान्तपरत्वम्). 5. DC, DD insert च after तथा. 7. DC, DD प्रसूतित्वमवाप्स्यसि. 8. VSP -पुराणेऽपि for -पुराणवचने. 9. AS omits तु (after नाशितं); SP च for तु. DA तौ, DB वै for तैः. 11. DA नभःश्रावणोपादाना-. 11-12. DA पौर्णमास्यन्तपरत्वावधारणाच्च. 12. DA -भाद्रपरता for -भाद्रे नियता. DB inserts अस्यैव after -संक्रमणे. 12-13. AS, VSP -संक्रमे सौर-. 13. DB, DD, AS omit सौर-. AS, SP omit तत्र. 13-14. DA, DC, DD, AS -राशिगतसूर्यविशेषणा-, SP -राशिं गते इति विशेषणा-. 14. DB अस्ति for अस्तु. DA, DB, DC, DD, AS, SP एवं वियोगे.

कदाचिद्भूतलोपापत्तेः। तदा च

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
वर्षे वर्षे तु कर्तव्या तुष्ट्यर्थं चक्रपाणिनः॥

तथा जन्माष्टमीं प्रकृत्य भविष्योत्तरे (भविष्यपुराण ४.५५.६४-६५)

प्रतिवर्षं विधानेन मद्भक्तो धर्मनन्दन।
नरो वाप्यथवा नारी सौभाग्यमतुलं लभेत्॥

इत्यादिवचनेषु वीप्सावाधः।

सिंहराशिगते (भविष्यपुराण ४.५५.१५)

इति तु प्रायिकसिंहसंबन्धमनुरुध्य फलप्रकर्षबोधकम्, भगवज्जन्मसमये तथाविधस्वरूपबोधनपरं वा। अतएव

शशाङ्के वृषराशिस्थे (भविष्यपुराण ४.५५.१६)

इत्युक्त्वापि

नक्षत्रे रोहिणीयुते (भविष्यपुराण ४.५५.१६)

इत्युक्तमिति। एवं च कदाचित् सौरश्रावणेऽपि व्रतमेतदिति सिद्धम। अतएव श्रावण्यन्तरितकृष्णाष्टमी जन्माष्टमीति दाक्षिणात्यपाश्चात्यसंग्रहेषु दृश्यते इति। अनयोश्च वचनयोर्वीप्साश्रुतेर्नित्यत्वमप्यस्य। अतएव स्कन्दपुराणे

1. DB, DC, VSP तथा for तदा. DA omits च. 3. VSP inserts इति after चक्रपाणिनः. 4. DA भविष्ये for भविष्योत्तरे. 5. DB वर्षविधानेन 6. DB उत्तमं for अतुलं. 8. SP, VSP -राशिं गते. 9. DC प्रायिकसिंहराशिसंबन्ध-, DD प्रायिकं सिंहराशिसंबन्ध-, AS प्रायिकं सिंहसंबन्ध-. 10. VSP -रूप- for -स्वरूप-. 11-13. DB, DC, DD, AS, SP, VSP transpose शशाङ्के वृषराशिस्थे and नक्षत्रे रोहिणीयुते 12. DA omits अपि. 14. DB inserts अपि after इत्युक्तम्. SP omits कदाचित्. DB निषिद्धमिति for इति सिद्धम्. 15. DB, SP omit जन्माष्टमी. VSP omits इति (after दृश्यते). 16. DA, VSP omit च. SP स्कन्दपुराणम्.

गृध्रमांसं खरं काकं श्येनं वा मुनिसत्तम।
मांसं वा द्विपदां भुङ्क्ते कृष्णजन्माष्टमीदिने॥
जन्माष्टमीदिने प्राप्ते येन भुक्तं द्विजोत्तम।
त्रैलोक्यजनितं पापं तेन भुक्तं न संशयः॥
ब्रह्मघ्नश्च सुरापश्च गोवधः स्त्रीवधोऽपि वा।
न लोको मुनिशार्दूल जयन्तीविमुखस्य तु॥
ये न कुर्वन्ति जानन्तः कृष्णजन्माष्टमीव्रतम्।
ते भवन्ति महाप्राज्ञ व्याला महति कानने॥
श्रावणे वहुले पक्षे कृष्णजन्माष्टमीव्रतम्।
न करोति नरो यस्तु भवति क्रूरराक्षसः॥
श्रावणे वहुले पक्षे न करोति यदाष्टमीम्।
घोररूपाः क्रूरमुखा हिंसन्ति यमकिंकराः॥
न करोति यदा विष्णोर्जयन्तीसंभवं व्रतम्।
यमस्य वशमापन्नः सहते नारकीं व्यथाम्॥
अतीतानागतं तेन कुलमेकोत्तरं शतम्।
पातितं नरके घोरे भुञ्जता कृष्णवासरे॥

तदेवं विशेषप्रत्यवायवोधकवाक्यैर्व्रतस्यास्य नित्यत्वे गुणोपसंहारन्यायेन व्रतान्तरोक्तानुकल्पोपसंहारोऽपि वोध्यः। तदुक्तं ब्रह्मवैवर्ते

1. DB गृध्रं मांसं. VSP श्वानं for श्येनं. [1ff. The verses गृध्रमांसं खरं etc. are not found in the present Skanda-p.]. 2. DB, AS, VSP भुक्तं for भुङ्क्ते. 3. DC, DD भुङ्क्ते for भुक्तं. 4. DA inserts इति after संशयः. 8. DA महाप्रज्ञा, SP महाक्रूरा for महाप्राज्ञ. DB, DD व्यालो for व्याला-. 10. VSP स भवेत् for भवति. 12. DB, AS, SP, VSP क्रूर- for घोर-. DA -रूपा for -मुखा. 13. SP -संज्ञकं for -संभवं. 15. VSP येन for तेन. SP कुलमेकोनविंशतिम् for कुलमेकोत्तरं शतम्. 16. DA भुञ्जते for भुञ्जता. DB, AS insert इति after कृष्णवासरे. 17. DB -प्रत्यय- for -प्रत्यवाय-. DA गुणोपहार-. 18. DB -कल्पोऽत्र, DC, DD -कल्पसंहारोऽपि for -कल्पोपसंहारोऽपि. DA वोद्धव्यः for वोध्यः. AS, SP, VSP यदुक्तं for तदुक्तं.

उपवासासमर्थश्चेदेकं विप्रं तु भोजयेत्।
तावद्धनानि वा दद्याद् यद्भक्ताद् द्विगुणं भवेत्॥
सहस्रसंमितां देवीं जपेद्वा प्राणसंयमान्।
कुर्याद् द्वादशसंख्यान् वा यथाशक्ति व्रते नरः॥

इति। फलश्रवणात् काम्यत्वमप्यस्य, अनुषङ्गफलजनकत्वं वा। यथा विष्णुरहस्ये

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
मुहूर्तमपि लभ्येत सोपोष्या सा महाफला॥

स्कन्दपुराणे

व्रतेनाराध्य तं देवं देवकीसहितं हरिम्।
मुक्त्वा यमपथं घोरं याति विष्णोः परं पदम्॥
जन्माष्टमीव्रतं ये वै कुर्वन्ति च नरोत्तमाः।
कारयन्त्यथवा लोकान् लक्ष्मीस्तेषां सदा स्थिरा॥

एषा च त्रिविधा भवति—जन्माष्टमी रोहिण्यष्टमी जयन्ती चेति। तत्र केवलाष्टमी जन्माष्टमी। अस्यां चाखण्डायां नास्ति विप्रतिपत्तिः। तिथिद्वैधे

1. DB च for तु. 2. DB, VSP भुक्तात् for भक्तात्. 4. DB, AS संख्यातान्, DC (before correction), SP -संख्याकान्, DD -संख्याकावान् (corrupt) for -संख्यान् वा DA व्रतेन वा for व्रते नरः. 5. AS omits अपि. DB अनुषङ्गफलजनकत्वात्, DC आनुषङ्गिकफलकत्वं वा, DD, AS, VSP अनुषङ्गफलकत्वं वा, SP आनुषङ्गिकं फलं वा for अनुषङ्गफलजनकत्वं वा. 6. DA भवति for नभसि. 7. DA नोपोष्या सा, DB सोपास्या सा, DC, DD सोपोष्या च, SP सैवोपोष्या, VSP उपोष्या सा for सोपोष्या सा 9. DB -संयुतं for -सहितं 10. VSP inserts इति after परं पदम् 11. DA हि for च. AS नरोत्तम. 12. DA, DB, DC, DD, AS, SP, VSP तस्य for तेषां DC, DD, SP, VSP insert इति after सदा. स्थिरा 13. DC, DD विविधा, AS त्रिधा for त्रिविधा. DC, DD संभवति for भवति. DC omits इति. 14. SP omits तत्र केवलाष्टमी जन्माष्टमी. DD omits जन्माष्टमी. DC, DD insert इति after विप्रतिपत्तिः.

यदहरस्तगामिनी तदहरेव व्रतं कृत्वा परदिने तिथ्यन्ते पारणम्,

अलाभे रोहिणीभस्य कार्याष्टम्यस्तगामिनी।
तत्रोपवासं कृत्वैव तिथ्यन्ते पारणं स्मृतम्॥

इति विष्णुरहस्यवचनात्। ह्रासवशाद्दिनद्वयेऽस्तसंबन्धाभावेऽपि पूर्वदिन एव। तदुक्तं विष्णुरहस्ये

अष्टमी शिवरात्रिश्च कार्ये भद्राजयान्विते।
कृत्वोपवासं तिथ्यन्ते तदा कुर्यात्तु पारणम्॥

तथा

कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी।
पूर्वविद्धैव कर्तव्या परविद्धा न कुत्रचित्॥

तथा संवर्तः

कृष्णाष्टमी बृहत्तपा सावित्री वटपैतृकी।
अनङ्गत्रयोदशी रम्भा उपोष्याः पूर्वसंयुताः॥

तथा पैठीनसिः

कृष्णाष्टमी स्कन्दषष्ठी शिवरात्रिचतुर्दशी।
एताः पूर्वयुताः कार्यास्तिथ्यन्ते पारणं भवेत्॥

1. AS अपरदिने. VSP omits परदिने. DB पारणा for पारणम्. 2. DD कार्यात्तस्यस्तगामिनी (corrupt), AS कार्या एवास्तगामिनी for कार्याष्टम्यस्तगामिनी. 3. DA कुर्वीत for कृत्वैव. AS भवेत् for स्मृतम्. 4. DA विष्णुपुराणवचनात्. AS omits विष्णुरहस्यवचनात्. VSP inserts यदा तु before ह्रासवशात्. DB दिनद्वयास्तसंबन्धा-, AS दिनद्वयमप्यस्तसंबन्धा-, VSP दिनद्वयेऽप्यस्तसंबन्धा-. AS omits अपि. 5. AS यदुक्तं for तदुक्तं. DA शिवरहस्ये for विष्णुरहस्ये. 6. DB तत्र, DC, DD, AS, SP, VSP भद्र- for भद्रा-. [Vk, pp. 73, 304 and 306 read भद्रजयान्विते. But see our note on the reading भद्राजयान्विते occurring in the metrical line 'जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते' on p. 185 below]. 7. VSP च for तु. 8. DA, DC, DD omit तथा. 15. DD -चतुर्दशीः.

इति। यदा तु दिनद्वयेऽप्यस्तगामिनी तदा परदिन एव,

त्रिसंध्यव्यापिनी या तु सैव पूज्या सदा तिथिः।
न तत्र युग्मादरणमन्यत्र हरिवासरात्॥

इति लक्ष्मीधरलिखितपराशरवचनात्। अतएव तिथिविवेके यदा षष्ठीसमेता सप्तमी पूर्वदिने परदिने चोदयास्तव्यापिनी तदा परदिने एवेत्युक्तमिति। तदेवं जन्माष्टमी अखण्डा, पूर्वदिनेऽस्तगा, परदिनेऽस्तगा उभयत्रानस्तगा, उभयत्रास्तगा इति पञ्चविधा दर्शिता। सैव चाष्टमी पूर्णा खण्डा वा यत्र रोहिणीयुक्ता स्यात् तत्रैवोपोष्या।

प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी।
मुहूर्तमपि लभ्येत उपोष्या सा महाफला॥

तथा

मुहूर्तमप्यहोरात्रे यस्मिन् युक्तं प्रदृश्यते।
अष्टम्या रोहिणीऋक्षं तां सुपुण्यामुपावसेत्॥

इत्यादिस्मृतेः,

1. DA, SP omit इति. 1-5. DB omits all words from यदा तु to सप्तमी पूर्वदिने. 1. VSP च for तु. 4. AS -धृत- for -लिखित-. SP -समवेता for -समेता. 5. DA omits पूर्व-. DA omits च ( before उदयास्तव्यापिनी ). DA omits इति after एवेत्युक्तम्. 6. DA सखण्डा, AS अखण्डगा for अखण्डा. AS, SP insert च after परदिने. DA omits उभयत्रानस्तगा. AS transposes उभयत्रानस्तगा and उभयत्रास्तगा. 7. DA पञ्चधा for पञ्चविधा. DB, AS omit च ( after सैव ). 12. AS transposes यस्मिन् and युक्तं. DA तु दृश्यते for प्रदृश्यते. 13. DB, SP, VSP अष्टम्यां for अष्टम्या. VSP तां पुण्यां समुपोषयेत् for तां सुपुण्यामुपावसेत्. DC उपोषयेत् for उपावसेत्.

वासरे वा निशायां वा यत्र युक्ता तु रोहिणी।
विशेषेण नभोमासि सैवोपोष्याष्टमी तिथिः॥

इति माधवीयसंग्रहलिखितवसिष्ठवचनाच्च। इत्थं यदि षष्टिदण्डात्मिकाप्यष्टमी परदिने उदयात् परं स्वल्पमात्रापि रोहिणीयुक्ता तदा सैवोपोष्येत्युक्तम्। यदा तु सप्तमीविद्धाष्टम्यर्धरात्रात् परतो रोहिणीयुता परदिने चार्धरात्रात् पूर्वं तदा परदिन एव, नक्षत्रस्यास्तसंबन्धेन बलवत्त्वात्। तदुक्तं भविष्ये

उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः।
यत्र वा युज्यते राम निशीथे शशिना सह॥

इति। यदा तु विना जयन्तीयोगं पूर्वदिने निशीथव्यापिनक्षत्रयुताष्टमी परदिने चास्तव्यापिनक्षत्रयुता तदा नक्षत्रस्यानियामकतया

त्रिसंध्यव्यापिनी

1-3. DA, AS omit all words from वासरे वा to -वसिष्ठवचनाच्च. 2. DB -मासे for -मासि. VSP महाफला for अष्टमी तिथिः. 3. VSP omits all words from इति to -वसिष्ठवचनाच्च. DC, DD omit -संग्रह-. DB omits -लिखितवसिष्ठ-. DC omits च (after -वचनात्). VSP षष्टिदण्डाप्याष्टमी. DA inserts पूर्वदिने before परदिने. 4. DB अल्प- for स्वल्प-. VSP inserts भवेत् after रोहिणीयुक्ता. 5. DB -युक्ता for -युता. DB omits एव. 6. VSP नक्षत्रस्यास्तमयसंबन्धेन. DB भविष्योत्तरे for भविष्ये. [7-8. The verse उपोषितव्यं नक्षत्रं, which is the same as Viṣṇudharmottora I. 60. 26b-27a, must have belonged to the Viṣṇudharmottora and not to the Bhaviṣya because of the facts that in most of the commentaries and Nibandhas this verse is ascribed to the Viṣṇudharmottara whereas the Bhaviṣya is mentioned as a source of this verse in only one place, viz., St I, p. 49 (where also the Viṣṇudharmottora is named), and that it is in the Viṣṇudharmottara, and not in the Bhaviṣya-p., that Bhārgava appears as an interlocutor and is often addressed as 'Rāma']. 10. DA haplologically omits -युता तदा नक्षत्र-. SP -नियामकता. 11. DB, VSP त्रिसंध्याव्यापिनी.

इति वचनात् परदिन एव। यदा तु सा सप्तमीविद्धा परदिने न त्रिसंध्यव्यापिनी, रोहिणी च परदिन एवास्तगामिनी निशीथव्यापिनी वा पूर्वदिने त्वतथाभूता तिथिमात्रं स्पृशति, तदापि चैवम्। यदा तु सप्तमीरात्रिशेषे रोहिणीसहिताष्टमी परदिने च न रोहिणी, सती वा नास्तव्यापिनी, तदा पूर्वदिन एवोपवासः।

मुहूर्तमप्यहोरात्रे

इत्यादिविष्णुरहस्यादिवचनात् बलवन्नक्षत्रसंबन्धाच्च।

पारणां त्वपरेऽहनि

इति वक्ष्यामः। अत्रोपवासद्वयम्, परदिने महानिशायामेव तिथ्यन्तलाभात्—इति सांप्रदायिकाः। तदसत्। तिथ्यृक्षयोरेकवियोगेऽपि पारणाया वक्ष्यमाणत्वात्। एवं शुद्धाष्टमीरात्रिशेषादारभ्य परदिने रात्रिशेषपर्यन्तं रोहिणीव्याप्तावपि ज्ञेयम्। तदेवं विना जयन्तीं संशये नक्षत्रबलवशादुपवासः, तत्साम्ये तिथ्यनुरोधादेवोपवास इति नयेन निर्णेयं सर्वत्रेति। यदा त्वर्धरात्रव्यापिन्यष्टमी रोहिणीयुक्ता तदा नक्षत्रबलमप्रयोजकीकृत्यापि तस्यां जयन्त्यामेवोपवासं कृत्वा परदिने सति संभवे तिथिभान्ते पारणम्। यथा विष्णुरहस्ये

1. AS, SP omit सा. DB, DC, DD omit न. DB, VSP त्रिसंध्याव्यापिनी. 2. AS transposes अस्तगामिनी and निशीथव्यापिनी. SP च for वा. DA च for तु. DA, DB, DC तथाभूता for अतथाभूता. 2-3. SP तथामात्रं for अतथाभूता तिथिमात्रं. 3. SP च for तु. 4. DA omits च (after परदिने) and reads instead: महानिशाव्यापिनी अष्टमी. DB, DC omit न. DA (after correction from सती) सहिता for सती. SP अष्टमी चास्तव्यापिनी for सती वा नास्तव्यापिनी. AS पर- for पूर्व-. 5. DB, DC, AS -रात्रम् for -रात्रे. 6. DB, AS, SP -विष्णुरहस्यवचना-. 9. DA तिथिनक्षत्रयो- for तिथ्यृक्षयो-. 10. AS परदिनरात्रिशेष-. DA, DC, DD -व्याप्ता तत्रापि ज्ञेयम्. 11. AS एवं for तदेवं. VSP (after correction from -बल-) -लव- for -बल-. DC -वसा-, DD -बला- for -बलवशा-. DB haplologically omits तत्साम्ये तिथ्यनुरोधादेवोपवास-. 12. DA, DC, DD निर्णयं for निर्णेयं. DA omits सर्वत्रेति. DB, DC, DD omit तु (after यदा). DB, AS -रात्रि- for -रात्र-. 13. SP -प्रयोजकं कृत्वापि for -प्रयोजकीकृत्यापि. 13. DC, DD, AS यथासंभवं, SP यथासंभव- for सति संभवे. 14. AS omits तिथिभान्ते.

अर्धरात्रादधश्चोर्ध्वं कलयापि यदा भवेत्।
जयन्ती नाम सा प्रोक्ता सर्वपापप्रणाशिनी ॥

भविष्यपुराणेऽपि

अर्धरात्रे तु रोहिण्या यदा कृष्णाष्टमी भवेत्।
तस्यामभ्यर्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति ॥

यदा पुनस्तिथिनक्षत्रवृद्ध्या दिनद्वयेऽपि जयन्ती तदा परैवोपोष्या, तद्दिन एव नक्षत्रस्यास्तनिशोथसंबन्धयोर्वलवत्त्वात्, तिथेस्त्रिसंध्यव्यापित्वाच्च। एतन्मूलमेव पुराणवचनं मदनपारिजाते लिखितम्। यथा

वर्जनीया प्रयत्नेन सप्तमीसहिताष्टमी

( ब्रह्मवैवर्तपुराण ४.८५४ क )। तथा

सऋक्षापि न कर्तव्या सप्तमीसहिताष्टमी

( ब्रह्मवैवर्तपुराण ४.८.५४ ख ) इति। यत्तु

जयन्ती शिवरात्रिश्च कार्ये भद्राजयान्विते

3. DA, SP भविष्ये for भविष्यपुराणे. DB, SP omit अपि. 4. [ In Kv, Kn, Vk, Np, St etc., which quote the verse अर्धरात्रे तु, the reading रोहिण्यां (for रोहिण्या) occurs ]. 5. DC, DD, AS, SP, VSP सौरे- for शौरे-. 6. After कृत्वा तत्र न सीदति DB, DC, DD, VSP insert "तथा वशिष्ठः—अष्टमी रोहिणीयुक्ता निश्यर्धे दृश्यते यदा (DC, DD यदि for यदा)। मुख्यकालः स विज्ञेयस्तत्र जातो हरिः स्वयम् ॥" 7. SP -नक्षत्रादिवृद्ध्या. AS repeats दिनद्वये. DB जयन्तीयोगः for जयन्ती. 8. DA, DD नक्षत्रस्यान्तनिशीथ-. AS एतत्स्थलमेत्रमेव (corrupt) for एतन्मूलमेव. 9. DA भविष्यपुराणवचनं, DC पराशरवचनं for पुराणवचनं. DC, DD -पारिजातेन, AS, SP, VSP -पारिजात- for -पारिजाते. DA तथा for यथा. 10. DB inserts इति after सप्तमीसहिताष्टमी. 12. DB सऋक्षा च, SP सा सर्क्षापि for सऋक्षापि 14. DC, DD, AS, SP, VSP भद्रजयान्विते. [ For the reading भद्राजयान्विते see Kn, pp. 222 and 296, Np, p. 600, and so on. But in St I, pp. 49 and 26 the reading भद्रजयान्विते occurs ].

इति, तत् सामान्यमुक्तविशेषेतरपरमिति। अत्र च सर्वत्रैवोपवासे यदा परदिने तिथिभान्तः पारणायोग्यकाले न लभ्यते तदा तयोरेकवियोगेऽपि पारणं कार्यम्। तथा च वह्निपुराणे (अध्याय ६५)

भान्ते कुर्यात्तिथेर्वान्ते शस्तं भारत पारणम्।

तथा

रोहिणीसंयुता चेयं विद्वद्भिः समुपोषिता।
वियोगे पारणं कुर्युर्मुनयो ब्रह्मवादिनः॥
सांयोगिके व्रते प्राप्ते यद्येकोऽपि वियुज्यते।
तत्रैव पारणं कुर्यादेवं वेदविदो विदुः॥

(वह्निपुराण, अध्याय ६५) इति। यदा पुनरेकोऽपि न वियुज्यते तदा तयोरपि पारणं कुर्यात्। अन्यथा द्वितीयदिनेऽप्युपवासप्रसङ्गः। तथा चोपवासव्रतसमाप्त्यर्थपारणपदार्थानुपपत्तेः। तथा चात्रार्थे वचनान्यपि दृश्यन्ते—

तिथ्यृक्षयोर्यदा भेदो नक्षत्रस्यान्त एव वा।
अर्धरात्रे ततः कुर्यात् पारणं त्वपरेऽहनि॥

1. DB यत्सामान्यमुक्तं तद्विशेषेतरपरमिति, DC, DD तत्सामान्यमुक्तविषयेतरपरमिति, VSP तत्सामान्यसूत्रं विशेषेतरपरमिति for तत्सामान्यमुक्तविशेषेतरपरमिति. DB, SP omit च. DC, DD omit एव (after सर्वत्र). 2. DD तिथिभान्तं. VSP पारणयोग्य-. DB, DD -कालो for -काले. VSP omits न. 3. DC, VSP omit च. DB, VSP अग्निपुराणे, DD, AS, SP वह्निपुराणं for वह्निपुराणे. 4. DB inserts इति after पारणम्. 5. VSP omits तथा. [6. The line 'रोहिणीसंयुता चेयम्' does not occur in the present text of the Vahni-p.]. 8 DB, SP सांयौगिके. SP विमुच्यते for वियुज्यते. 9. VSP इति for एवं. 10. VSP omits इति. VSP द्वयोरपि for तयोरपि. 11. DC, DD insert पारणा before चोपवासव्रत-. 11-12. DA चोपवासे व्रतसमाप्त्यर्थ-. 12. DC, DD -पारणापदार्थत्वानुपपत्तेः. DC, DD omit अपि. DB inserts यथा after दृश्यन्ते. 14. VSP अथवा for ततः. DC, DD, VSP insert इति after त्वपरेऽहनि.

अपरेऽह्नि दिवसे पारणं कुर्यादित्यर्थः। तथा

याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः।
ऋक्षान्ते पारणं कुर्याद्विना श्रवणरोहिणीम्॥

इत्यादि। यत्तु

तिथिभान्ते च पारणम्

इति क्वापि, तन् संभवाभिप्रायमिति हेमाद्रिमदनपारिजातादिसंमता व्यवस्था। यदा पुनः सूर्योदये स्वल्पाष्टमी रोहिणीयुता, अनन्तरं संपूर्णा नवमी सोमवारेण बुधवारेण वा युता स्यात्, तदा सर्वापवादिका सैवोपोष्या। यदाह ब्रह्मवैवर्तः (४.८.६२-६३)

उदये चाष्टमी किंचिन्नवमी सकला यदि।
भवेत्तु बुधसंयुक्ता प्राजापत्यर्क्षसंयुता।
अपि वर्षशतेनापि लभ्यते वा न वा विभो॥

1. SP omits all words from अपरेऽह्नि to कुर्यादित्यर्थः. DC, DD उपवास-परदिवसे for दिवसे. DB यथा, VSP तथा च for तथा. 2. DB, DC, DD, SP transpose प्रोक्ताः and पुण्याः. 3. DA श्रावण- for श्रवण-. 6. DB omits हेमाद्रि-. AS omits -मदन-. After व्यवस्था DC, DD insert इति, AS, VSP एवेति, and SP inserts एव. DC, DD यदि for यदा. 7. DC, DD सूर्योदयकाले for सूर्योदये. AS, SP स्वल्पाप्यष्टमी, VSP अल्पाष्टमी for स्वल्पाष्टमी. DA सोमवारे for सोमवारेण. 8. DB, AS omit वा. VSP inserts इति after सैवोपोष्या. 9. DC, DD transpose नवमी and सकला. 10. VSP भवेद्बुधेन संयुक्ता for भवेत्तु बुधसंयुक्ता. 11. AS न लभ्यते for न वा विभो. After लभ्यते वा न वा विभो DB, DC, DD, SP insert : "तथा (SP omits तथा) विष्णुधर्मोत्तरे—अष्टमी बुधवारेण रोहिणीसहिता यदि। भवेत्तु मुनिशार्दूल किं व्रतैर्बहु- (DC यज्ञ-, SP व्रत- for बहु-) कोटिभिः॥" [That this passage is an interpolation is definitely proved by the fact that it is omitted by Raghunandana, who quotes the entire extract from यदा पुनः सूर्योदये (lines 6-7) to कुलकोट्यास्तु मुक्तिदा (p. 188, line 5) in his St I, pp. 47-8 for refutation. Cf. App. I. This interpolation was, however, made before the time of Gopāla Nyāyapañcānana who gives it in his Tithinirṇaya (fol. 113a-b) in a quotation from आचार्यचूडामणि. See App. I].

तथा पद्मपुराणे

प्रेतयोनिगतानां तु प्रेतत्वं नाशितं तु तैः।
यैः कृता श्रावणे मासि अष्टमी रोहिणीयुता ॥
किं पुनर्बुधवारेण सोमेनापि विशेषतः।
किं पुनर्नवमीयुक्ता कुलकोट्यास्तु मुक्तिदा ॥

इति। पूजाविधानं तु ग्रन्थगौरवभयान्नोक्तम् ॥

अथाघोरचतुर्दशी ॥ भविष्योत्तरे

सिंहराशिगते सूर्ये कृष्णपक्षे चतुर्दशी।
अघोरेति समाख्याता सर्वपापप्रणाशिनी ॥

तथा

भाद्रे मास्यसिते पक्षे अघोराख्या चतुर्दशी।
तामुपोष्य नरो याति शिवलोकमयत्नतः ॥
तस्यामनावृते देशे जागरित्वा शिवार्चनम्।
ये कुर्वन्ति हरस्तेषां प्रीतये भुक्तिमुक्तिदः ॥

1. DA वायुपुराणे, VSP पाद्मे for पद्मपुराणे. 6. DB omits इति. After इति DA inserts मदनपारिजातसंमता व्यवस्था. Instead of the words from पूजाविधानं to नोक्तम्, DA reads पूजाविधानं तु ग्रन्थगौरवभयान्नेहोक्तम्, DB पूजादिविधानं चेह ग्रन्थगौरवभयान्नोक्तमिति, DC, DD पूजाविधानं च ग्रन्थगौरवभिया नोक्तमिति, AS पूजाविधानं च ग्रन्थगौरवभिया नोक्तम्, SP पूजादिकं तु बाहुल्यान्नोक्तम्, and VSP पूजाविधानं त्वन्यतो ज्ञेयम्, इह ग्रन्थविस्तरभिया नोक्तमिति. After ग्रन्थगौरवभयान्नोक्तम् DB inserts: एतदनन्तरितकृष्णात्रयोदशी युगाद्या, whereas DC, DD have: "अत्रैव जयन्तीयोगे उपवासोऽङ्गं पूजा प्रधानम्। सोपवासो हरेः पूजामित्यादिश्रवणात्। अष्टमीमात्रपक्षे उपवास एव प्रधानमिति।" 7. SP अथाघोरा चतुर्दशी. DA भविष्ये for भविष्योत्तरे. 12. VSP विष्णु- for शिव-. SP प्रयत्नतः for अयत्नतः. 13. DA तस्या समावृते (corrupt) for तस्यामनावृते. 14. AS, VSP प्रीयते for प्रीतये. DC, DD भक्ति- for भुक्ति-. After भुक्तिमुक्तिदः DA inserts: "अत्राप्युक्ताष्टमीवद्भाद्रो गौणश्चान्द्रः। पौर्णमास्यन्तमासस्यैव सकलतिथिकृत्यादितया ब्रह्मपुराणादावगमात्। सिंहराशिगतत्वं तु प्रायिकम्", and VSP inserts: "अत्राप्युक्ता चतुर्दशी भाद्रो गौणचान्द्रः। पौर्णमास्यन्तमासस्य सकलतिथिकृत्याङ्गतया ब्रह्मपुराणादावगमात्। सिंहराशिगतत्वं तु प्रायिकः।"

अत्रापि तिथिद्वैधे युग्मवचनात्

त्रिसंध्यव्यापिनी

इत्यादिवचनाच्च यथायथं व्यवस्थेति ।

शुक्लतृतीया चात्र मन्वन्तरादिः ।

अथ भविष्ये ( १.३१. १-२, ४ )

शिवा शान्ता सुखा राजंश्चतुर्थी त्रिविधा मता ।
मासि भाद्रपदे शुक्ला शिवा लोकेषु पूजिता ॥
तस्यां स्नानं तपो दानमुपवासो जपस्तथा ।
भवेत् सहस्रगुणितं प्रसादाद्दन्तिनो नृप ॥
यास्त्वस्यां कुरुशार्दूल पूजयन्ति सदा स्त्रियः ।
गुडैर्लवणपूपैश्च श्वश्रूं श्वशुरमेव च ।
तासां सौभाग्यमतुलं भवेज्जन्मनि जन्मनि ॥

तथा भोजदेवलिखितानि वचनानि—

शुक्लपक्षे चतुर्थ्यां तु सिंहे चन्द्रस्य दर्शनम् ।
मिथ्याभिशंसनं कुर्यान्न पश्येत्तत्र तं ततः ॥

1. SP omits युग्मवचनात्. VSP inserts कृत्स्नात्राव्याप्ता before युग्मवचनात्; DB, AS insert कृत्स्नरात्रिव्याप्त्या after युग्मवचनात्. 3. DA इति for इत्यादि-. DC, DD, SP omit च (after -वचनात्). DC, DD यथायोगं for यथायथं. DB, SP व्यवस्थितेति, DC, DD व्यवस्थेत्यर्थः for व्यवस्थेति. 4. DA एतदनन्तरं शुक्लद्वितीया for शुक्लतृतीया चात्र. 5. SP omits अथ. [6-9. The verses शिवा शान्ता and तस्यां स्नानं agree also with Bhaviṣya-p. II. ii. 8. 13b-14a and 15]. 6. DB शुभा राजन्, SP स्वराजाश्च (corrupt) for सुखा राजन्. VSP स्मृता for मता. 7. DA, DC, DD, SP, VSP शिव- for शिवा. 9. DC, DD, SP शूलिनो, AS कुम्भिनो for दन्तिनो. [12. The line तासां सौभाग्यम् etc. is not found in the Bhaviṣya-p.]. 13. DB, DC, DD, SP, VSP लिखितवचनानि. 14. DB, DC, DD, AS दर्शनात् for दर्शनम्. [For the reading दर्शनम् see Kv, p. 412, Vk, p. 316, St I, p. 32, and so on]. 15. SP, VSP मिथ्याभिशापं for मिथ्याभिशंसनं. [The reading मिथ्याभिशापं कुरुते occurs in St. I, p. 32]. SP, VSP कुरुते for कुर्यात्. AS inserts तु after कुर्यात्. DD तु for तत्र. DC, DD तत् for तं.

ब्रह्मपुराणे

वासुदेवोऽभिशस्तस्तु निशाकरमरीचिषु ।
स्थितश्चतुर्थ्यां शुक्लायां मनुष्याणां पतिश्च यः ॥

अतश्चतुर्थ्यां चन्द्रं तु प्रयत्नाद्वीक्ष्य मानवः ।
पठेद्धात्रेयिकावाक्यं प्राङ्मुखो वाप्युदङ्मुखः ॥

सिंहः प्रसेनमवधीत् सिंहो जाम्ववता हतः ।
सुकुमारक मा रोदीस्तव ह्येष स्यमन्तकः ॥

अनेन मन्त्रेण मन्त्रितमुदकं पेयं स्यमन्तकोपाख्यानं च श्रोतव्यम् । अत्र

पञ्चाननगते भानौ पक्षयोरुभयोरपि ।
चतुर्थ्यामुदितश्चन्द्रो नेक्षितव्यः कदाचन ॥

इति वचनात् कृष्णचतुर्थ्यामपि चन्द्रादर्शनं वदन्ति । उदित इत्यभिधानादर्धोदितदर्शने न दोष इति केचित् । तथा ज्योतिषे

भाद्रे मासि सिते पक्षे चतुर्थ्यां स्वातियोगतः ।
करोति किल्विषं घोरं दृष्टश्चन्द्रो न संशयः ॥
करचित्रानिलर्क्षेषु हरौ सूर्ये चतुर्थिका ।
हरिताली समाख्याता रुद्राणीप्रीतिदा तिथिः ॥

3. AS (after correction from पतिश्च यः) गतिस्तथा, SP पतेच्च सः, VSP पतिस्तथा for पतिश्च यः. 4. DC, DD च for तु. SP, VSP प्रमादात् for प्रयत्नात्. 8. VSP omits मन्त्रेण. SP omits मन्त्रितम्. DC, DD insert इति after पेयम्. VSP तत्र for अत्र. 10. AS कथंचन for कदाचन. 11. VSP चन्द्रदर्शनं न कार्यमिति वदन्ति for चन्द्रादर्शनं वदन्ति. AS दर्शनात्, VSP उपादानात् for अभिधानात्. 12. SP omits इति केचित्. VSP कश्चित् for केचित्. DA भविष्योत्तरे for ज्योतिषे. 15. AS -चित्रानलर्क्षेषु.

भविष्योत्तरे ( भविष्यपुराण, ४.३६. ५६ख—५९क ; १.४६. १क, २क=२.२.८. २१ख—२२क)

तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।
यस्त्वालिख्य नरो भक्त्या कृष्णवर्णादिवर्णकैः ॥
पूजयेद्गन्धमाल्यैश्च सर्पिःपायसगुग्गुलैः ।
तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः ॥
आ सप्तमात् कुलात्तस्य न भयं नागतो भवेत् ।
तस्मात् सर्वप्रयत्नेन नागान् संपूजयेन्नरः ॥
येयं भाद्रपदे शुक्ला षष्ठी भरतसत्तम ।
स्नानदानादिकं सर्वमस्यामक्षयमुच्यते ॥

तथा भविष्यपुराणे रुद्र उवाच—

मासि भाद्रपदेऽष्टम्यां शुक्लपक्षे वरानने ।
स्नापयित्वा तु मां भक्त्या पयसा च घृतेन च ॥
अपामार्गेण कृत्वा तु पूजां मम विधानतः ।
हंसयानसमारूढो मम लोकं व्रजेदिति ॥

इयमेव दूर्वाष्टमी । भविष्योत्तरे ( भविष्यपुराण ४.५६.१-२ ) श्रीकृष्ण उवाच

1. DA omits भविष्योत्तरे. 3. DB, AS तदा, DC, DD यथा for तथा. 5. DA -माल्याद्यैः for -माल्यैश्च. 7. SP नो for न. 9. AS शुक्ल- for शुक्ला. 10. DC (after correction from सर्वमस्याक्षय-) तस्यां सर्वमक्षय- for सर्वमस्यामक्षय-. 11. DA यथा for तथा; DB omits तथा. DA, SP भविष्ये for भविष्यपुराणे. DA रुद्रवाक्यम् for रुद्र उवाच. After रुद्र उवाच DB, DC, DD insert : "भाद्रे मासि सिते पक्षे सप्तम्यां नियमेन या। स्नात्वा शिवं लेखयित्वा मण्डले च (DB मण्डलेन) सहाम्बिकम्। पूजयेत्तु तदा तस्यां (DC, DD तस्मात् for तस्यां) दुष्प्रापं नैव विद्यते ॥ (Bhaviṣya-p. IV. 46. 28, 34a) इयमेव कुक्कुटी ॥ तथा". 13. DB स्नपयित्वा. SP च for तु. 14. VSP transposes पूजां and मम. 15. DB -यानं समारूढो. DC, DD, AS, VSP transpose मम and लोकं. DA व्रजेदिह, SP व्रजेत्तु स इति for व्रजेदिति. 16. DA भविष्ये for भविष्योत्तरे. DA कृष्णवाक्यम् for श्रीकृष्ण उवाच.

पक्षे भाद्रपदस्यैव शुक्लाष्टम्यां युधिष्ठिर।
दूर्वाष्टमीव्रतं पुण्यं यः करोतीह मानवः॥
न तस्य क्षयमायाति संतानं साप्तपौरुषम्।
नन्दते वर्धते नित्यं यथा दूर्वा तथा कुलम्॥

अस्यामेव लक्ष्मीव्रतारम्भः।

मासि भाद्रपदे या स्यान्नवमी बहुलेतरा।
तत्र संपूज्य वै दुर्गामश्वमेधफलं लभेत्॥
प्राप्ते भाद्रपदे मासि एकादश्यां सितेऽहनि।
कटदानं भवेद्विष्णोर्महापूजा प्रवर्तते॥

कटदानं पार्श्वपरिवर्तः।

द्वादश्यां तु सिते पक्षे मासि प्रौष्ठपदे तथा।
शक्रमुत्थापयेद्राजा विश्वश्रवणवासवैः॥
इन्द्रः सुरपतिश्चैव वज्रहस्तो महाबलः।
शतयज्ञाधिपो देवस्तस्मै शक्राय वै नमः॥
वज्रहस्त सुरारिघ्न बहुनेत्र पुरंदर।
क्षेमार्थं सर्वलोकानां पूजेयं प्रतिगृह्यताम्॥
श्रवणाद्धरणीं यावत् पूजां कृत्वा समाहितः।
रात्रौ विसर्जयेच्छक्रं मन्त्रेणानेन पाण्डव॥

1. DA शुक्लेऽष्टम्यां युधिष्ठिरः for शुक्लाष्टम्यां युधिष्ठिर. 3. DC, SP आप्नोति for आयाति. 5. DC, DD महालक्ष्मी- for लक्ष्मी-. 7. SP तस्यां for तत्र. After line 7 DB, DC, DD insert: "इयमेव तालनवमीति ख्याता। तथा". [8-9. The verse प्राप्ते भाद्रपदे मासि is the same as Bhaviṣya-p. IV. 70. 40]. 10. DC, DD -परीवर्तः. 12. DB omits the entire line शक्रमुत्थापयेद्राजा etc. and reads instead शक्रस्य, leaving a short blank space after it. 13. DC, DD, AS, SP, VSP शक्रः for चैव. 14. VSP यज्ञ- for देव-. [15ff. Six lines from वज्रहस्त सुरारिघ्न are the same as Bhavisya-p. IV. 139. 37b-40a]. 15. DC, DD वज्रहस्तः. 16. SP क्षेमाणि for क्षेमार्थं. 17. DB omits श्रवणाद्धरणीं यावत्, leaving a blank space for it.

सार्धं सुरासुरगणैः पुरंदर शतक्रतो।
उपहारं गृहीत्वेमं महेन्द्रध्वज गम्यताम्॥

इन्द्रध्वजसमुत्थानं प्रमादान्न कृतं यदि।
ततो द्वादशमे वर्षे कर्तव्यं नान्तरा पुनः॥

द्वादशी श्रवणोपेता सर्वपापहरा तिथिः।
बुधवारसमायुक्ता ततः शतगुणा भवेत्॥
तामुपोष्य समाप्नोति द्वादशद्वादशीफलम्॥

अथानन्तव्रतम्॥ शक्रोत्थानान्तरितशुक्लचतुर्दश्यामनन्तव्रतम्—

शुक्लपक्षे चतुर्दश्यां मासि भाद्रपदे भवेत्।
तस्यानुष्ठानमात्रेण सर्वपापं प्रणश्यति॥ (भविष्यपुराण ४.९४.२)

भविष्यपुराणे (४. ९४. १)

अनन्तव्रतमेतद्धि सर्वपापहरं शुभम्।
सर्वकामप्रदं नृणां स्त्रीणां चैव युधिष्ठिर॥

अत्र तिथिद्वैधे

चतुर्दश्याथ पूर्णिमा

इति वचनात् परदिने मुहूर्तव्यापिन्यपि ग्राह्या, न तु तदूना।

व्रतोपवासनियमे घटिकैकापि या भवेत्

1. DC, DD transpose सार्धं and सुरासुरगणैः. [3-4. The verse इन्द्रध्वजसमुत्थानं is the same as Bhaviṣya-p. IV. 139. 30]. 7. DA -व्रतम् for -फलम्. DB, AS, VSP insert इति after -फलम्. 8. DB, AS, VSP शक्रोत्थानानन्तरितशुक्ल-, DC, DD शक्रोत्थानानन्तरशुक्ल-. 11. SP भविष्ये for भविष्यपुराणे. 13 ff. DD drops all words from स्त्रीणां चैव युधिष्ठिर to तत्रैव नक्षत्रयोगे फला- in line 2 on p. 194. 14. SP inserts च after अत्र. 16. DB, DD transpose परदिने and मुहूर्त-व्यापिन्यपि. SP कार्या for ग्राह्या. VSP omits न तु तदूना. 17. DB, DD, AS, SP घटिकैका यदा for घटिकैकापि या.

इत्यादिवहुवचनेषु घटिकाव्याप्त्यर्थैव पूज्यतावगमान्न क्वापि तदूनवेधश्रवणादिति। तत्रैव नक्षत्रयोगे फलातिशयः,

वारुणेन समायुक्ता

इत्यादिवचनादिति केचित्। एतच्च वचनं संवत्सरप्रदीपमात्रलिखितं (संवत्सर-प्रदीप, प: १४ क) नान्येषु निवन्धेषु दृश्यते। आचारविरोधाच्च न समूलम्। समूलत्वेऽप्यनन्तार्चनसंभवं फलं यदि शतभिषर्क्षे तदाक्षयं भवति। अक्षयत्वं चाकल्पस्थायित्वमिति पाश्चात्याः। अतो नक्षत्रानुरोधादपि न पूर्वदिने व्रतमिति। व्रतानुष्ठानविधिः पद्धतावनुसंधेयः॥

अथागस्त्योदयः॥ तत्र सौरभाद्रसप्तदशांशे निशान्ते अगस्त्योदयः। तदुक्तं ज्योतिषे

1. DC इति for इत्यादि-. DB, DC, DD, AS, SP, VSP -वहुषु वचनेषु for -वहुवचनेषु. SP पूज्यत्वावगमान्न. VSP तदूना वेधाश्रवणादिति. DB, DD अपि for इति. 2. DA अत्र, VSP अत्रैव for तत्रैव. DB नक्षत्रवेधः, SP शतभिषायोगे for नक्षत्रयोगे. 3. Instead of the Pratīka वारुणेन समायुक्ता SP reads the entire verse "वारुणेन समायुक्ता यद्यनन्तचतुर्दशी। तदाक्षयफलं दद्यादनन्तार्चनसंभवम्॥". 4. SP इति for इत्यादि-. DB एतत्तु बहुवचनं, DC, DD एतद्वचनं, VSP एतच्च व्रतं for एतच्च वचनं; SP omits एतच्च वचनं. 5. DC, DD, AS, SP insert अतः and VSP inserts अत्र before आचारविरोधाच्च न समूलम्। DA अभाव- (?) for आचार-. DB अमूलं, DC, DD, SP न मूलं for न समूलम्. 6. AS अनन्तार्चनफलं for अनन्तार्चनसंभवं फलम्. DB याताभिषाक्ष (corrupt) for शतभिषर्क्षे. DC, DD इति for भवति. 7. AS च कल्प- for चाकल्प-. DA -भोग्यत्वम् for -स्थायित्वम्. DA omits न. DB, AS insert इदं after व्रतम्. 8. DC, DD, SP, VSP insert च after -विधिः. DB, SP, VSP insert इति after अनुसंधेयः. 9. SP omits 'अगस्त्योदयः॥ तत्र सौर-". DC, DD अत्र for तत्र. DC, DD -भाद्रे सप्त-, SP -भाद्रपदसप्त- for भाद्रसप्त-. SP omits निशान्ते. SP उक्तं च for तदुक्तं.

पलप्रभा तत्त्वहता खखाङ्कयुता स्फुटार्केण यदा समा स्यात्।
याम्यां तदा स्यादुदयो निशान्ते मुनेरगस्त्यस्य सुरारिहन्तुः॥

अस्यार्थः—पलप्रभा पञ्च, तत्त्वं पञ्चविंशतिः, एतत्पूरिता, खखाङ्कयुता नवशताङ्कयुता, यदि रविस्फुटाङ्कतुल्या भवति। पञ्चविंशत्यधिकानि दशशतानीति यावत्। मघां भुक्त्वा पूर्वफाल्गुनीपादे रविणा भुक्ते इति निर्गलितार्थः। अर्घ्यं च कन्यासंक्रान्तिमध्ये दद्यात्। तदुक्तं भविष्योत्तरे (भविष्यपुराण ४. ११८. ५६ख-५७क)

कन्यायामगते सूर्ये सत्रिभागैस्त्रिभिर्दिनैः।
कन्यासंबन्धसंप्राप्ते सूर्येऽर्घ्यं संनिवर्तते॥

दिनत्रयस्य त्रिभागो दिनमेकम्, तेन चतुर्भिर्दिनैरित्यर्थः। तथा ब्रह्मवैवर्ते

1. DB तत्त्वमृता, AS तदुहिता (corrupt), SP तश्च युता (corrupt) for तत्त्वहता. After तत्त्वहता DA inserts : खखायुता नवशताङ्कहता. SP शशाङ्क- (after correction from खखाङ्क-) युक्ता for खखाङ्कयुता. 2. DA यस्यां for याम्यां. 3. DB विंशतिः, DC, DD पञ्चविंशति for पञ्चविंशतिः. 3-4. SP omits खखाङ्कयुता नवशताङ्कयुता. DB omits -शताङ्क-, leaving a blank space for it. 4. VSP omits यदि. DA, VSP भवन्ति for भवति. VSP inserts पञ्चविंशति before पञ्चविंशत्यधिकानि. 5. SP समां for मघां. DC, AS, SP, VSP -फल्गुनी- for -फाल्गुनी-. DB -पदे for -पादे. DC, DD भुङ्क्ते for भुक्ते. DA अर्घं, SP अर्घ्यदानं for अर्घ्यं. 6. DB भविष्यपुराणे for भविष्योत्तरे. 8. DB drops -मगते सूय leaving a blank space. DC (after correction from अगते), AS आगते for अगते. 9. For the entire line कन्यासंबन्धसंप्राप्ते etc. SP reads : कन्यासंबन्धकं सूर्ये प्राप्तेऽर्घः संनिवर्तते. DA संध्या- for कन्या-. DA, DC, DD सूर्येऽर्घ्यः, AS, VSP सूर्येऽर्घः for सूर्येऽर्घ्यं. 10. SP दिनत्रयत्रिभागो. DC, DD विभागो for त्रिभागो. DA, DB दिवसैः for दिनैः. [ Govindānanda, who quotes the entire line दिनत्रयस्य त्रिभागो etc. in his Vk, p. 340, reads दिनैः for दिवसैः]. DA inserts च after तथा. VSP inserts अपि after ब्रह्मवैवर्ते.

अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः ।
अर्घ्यं दद्युरगस्त्याय ये महोदयवासिनः ॥

महोदय उज्जयनी । तथा

कन्यायामगते सूर्ये शेषसप्तदिनेषु च ।
अर्घ्यं दद्युरगस्त्याय यावत् कन्यां रविर्व्रजेत् ॥
अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः ।
अर्घ्यं दद्युरगस्त्याय गौडदेशनिवासिनः ॥

अतोऽत्र देशभेदाद्विकल्पः । अर्घ्यदानविधिस्तु पद्धतावनुसंधेयः ॥

तथा भविष्ये

पौर्णमास्यां नभस्यस्य लोकपालान् समर्चयेत् ।
पृथिव्या रक्षणार्थाय सर्वकामविवृद्धये ॥

2. DD, VSP महोदयनिवासिनः for ये महोदयवासिनः. 3. DB, DD, VSP उज्जयिनी. 4. DB, DC (after correction from अगते), AS आगते for अगते. DB, DC, DD, SP, VSP तु for च. 5. DA अघं for अर्घ्यं. DB, DD, VSP दद्यात् for दद्युः. SP न स व्रजेत् for रविर्व्रजेत्. 7. DB omits गौडदेशनि- with a blank space for it. DB, AS insert इति after -निवासिनः. 8. DC, DD अतोऽन्यदेश- for अतोऽत्र देश-. DA अर्घ- for अर्घ्य-. DB, AS, SP, VSP पद्धत्यादौ for पद्धतौ. After अनुसंधेयः DB inserts इह तु विस्तरतया न लिखित इति, DC, DD विस्तरभयान्न लिखितः, AS विस्तरभिया न लिखितः, and VSP विस्तरभिया नेह लिखितः. 9. SP omits तथा भविष्ये. 11. Of रक्षणार्थाय DB has only the initial र- and the final -य, leaving a blank space for the intervening syllables.

